॥ श्रीः ॥

श्रीपतञ्जलिमहर्षिप्रणीतम्

# पातञ्जलमहाभाष्यम्

## अर्थसंग्रहटीकासहितम्

( प्रथमो भागः )

पं० गोपाळशास्त्रिणा प्रकाशितम्

निर्णयसागरमुद्रणालये मुद्रितम्



शके १८६२ सन इसवी १९४१

मूल्यम् १। सपादरूप्यकम् ।

पब्लिशरः—पं. गोपाळशास्त्री जोशी, घर नं. ६३
कांदेवाडी गल्ली, मुंबई न. ४

प्रिंटरः—रामचंद्र येसू शेडगे, निर्णयसागर प्रेस, २६–२८
कोलभाट स्ट्रीट, मुंबई नं. २

# उपोद्घातः



भगवान्मुनिविख्यातः सर्वज्ञः श्रीपतञ्जलिः ।
लोकाभीष्टकरो नित्यं मनोवाक्कायदोषनुत् ॥ १ ॥
योगशास्त्रं विनिर्माय मनःशुद्धिमकारयत् ।
वैद्यकेन शरीरस्य वाचां व्याकरणेन च ॥ २ ॥
शुद्धित्रयेण लोकानां भवत्येव समुन्नतिः ।
तस्मान्निर्मितशास्त्रौघस्तस्मै भाष्यकृते नमः ॥ ३ ॥
यत्कृतिस्तु महाभाष्यं पातञ्जलमितीर्यते ।
तदर्थबोधनार्थं हि महाभाष्यार्थसंग्रहः ॥ ४ ॥
क्व महाभाष्यगाम्भीर्यं क्व च मेऽल्पा मतिस्तथा ।
तथापि गुरुपादानां कृपा तत्त्वार्थबोधिनी ॥ ५ ॥
तयैवेयं समुत्पन्ना पूर्वेषां कृतितः पृथक् ।
महाभाष्यामृतं सर्वे पिबन्तु सर्वदानया ॥ ६ ॥
शास्त्रतत्त्वन्तु गीर्वाण्या बुध्यते न तथा समम् ।
परया भाषयातस्मान्मत्कृतिः परिगृह्यताम् ॥ ७ ॥

निवेदकः—

**पं. जोशीत्युपाह्वगोपालशास्त्री.**

# अभिप्रायाः

ॐ
श्री[illegible]गन्नाथो विजय-
तेतराम् श्रीगोवर्धन-
पीठाधीश्वरश्रीजगद्गुरु-
शंकराचार्यश्रीभारती-
कृष्णस्वामी

ॐ

श्रीजगन्नाथो विजयतेतराम् ।

श्रीमत्परमहंसेत्यादिविरुदावलीविराजितश्रीभारतीकृष्णतीर्थस्वामिभिः—

अत्यन्तप्रियायुष्मच्छ्रीगोपाळशास्त्रिज्योतिर्विदः श्रेयसे प्रत्यग्ब्रह्मैक्यानुसंधान-समनियत-श्रीनारायणस्मरणसंसूचिता आशिषः समुल्लसन्तुतराम् ।

सार्वजनीनमेतद्यज्जगद्गुरूणां महेश्वरापरावतार-श्रीमच्छंकरभगवत्पूज्यपादाचार्याणां प्रधानस्थान-श्रीजगन्नाथपुरीस्थ-श्रीमद्गोवर्धनमठ-श्रीभोगवर्धनपीठगोचराभक्तिरनवधिकश्रेयोनिदानमिति ॥

सम्प्रति—श्रीभारतभुव्यस्यां तत्र तत्र विद्यमानैर्भूयोभिर्विश्वविद्यालयैर्व्यवस्थाप्य सञ्चाल्यमानास्तास्तानैकानेकविद्याश्च परीक्षा उत्तितीर्षूणां विद्यार्थिनां जिज्ञास्वन्तराणाञ्च महते प्रयोजनाय कल्पमानामर्थसंग्रहसंज्ञां पातञ्जलमहाभाष्यटीकां नूतनामारच्य तत्प्रकाशनेन स्वविहितव्याकरणादिशास्त्राधीतिं स्वार्थीकुर्वन्तं ज्योतिर्वित्कुलोत्पन्नं लब्धव्याकरणाचार्यपदवीकमायुष्मन्तं श्रीगोपालशास्त्रिणमुपलक्ष्यात्यर्थं मोदमानमानसा आशास्महे यदीदृग्भिर्विद्यार्थ्युपकारकोद्योगैर्भूयो भूयश्चरितार्थयत्वेष स्वविद्वत्तामिति प्रयुञ्ज्महे चाशिषोऽस्य सार्वदिकसार्वत्रिकसर्वप्रकारकैहिकामुष्मिकपारमार्थिकनिःश्रेयसावधिकश्रेयःपरम्पराप्राप्तिकृत इति शम् ॥ वैशाखकृष्णद्वितीयेन्दुघस्रे श्रीयोगेश्वरीग्रामतः श्रीः

१२।५।४१

॥ श्रीः ॥

श्रीयुज्जोशीत्युपनामकगोपालशर्मशास्त्रिणो वाराणस्यां समधिगतव्याकरण-न्यायमीमांसादिशास्त्रव्युत्पन्ना यदृच्छयात्र समागताः। एषां च वाग्मितया व्युत्पादनसरण्या शेखरमहाभाष्यादिग्रन्थटीकाप्रबन्धरचनशैल्या च सुप्रसन्नमत्कैः पाण्डित्यकार्यनिर्वाहकयोग्यतानिश्चिन्वानैर्विशदीक्रियते, यदेते गुणग्राहिभिः कोविदप्रवरैर्भृशं माननीया इति।

लष्कर राजकीय–प्रधानपाठशालाध्यापक–महामहोपाध्याय

**रघुपतिशास्त्रिभिः**

---

पुणें. ३०।९।४०

पण्डित गोपाळशास्त्री जोशी यांनीं महाभाष्यान्त व्याकरणशास्त्राचें कित्येक वर्षें अध्ययन व अध्यापन केलें असून त्यांनीं महाभाष्यावर संस्कृत भाषेमध्यें सुबोध टीका लिहिली आहे, या टीकेचे योगानें महाभाष्यासारखा अत्यंत कठीण ग्रंथ व्याकरणशास्त्राचें साधारण ज्ञान असणारास सुद्धां सुलभ होईल याविषयीं मुळींच शंका नाहीं. गेल्या शतकांत महाराष्ट्रामध्यें व्याकरण शास्त्राच्या अध्ययनाध्यापनाची परंपरा हळुहळु सुटत चाललेली दिसते. त्या परंपरेचें उज्जीवन पण्डित गोपाळ शास्त्री जोशी या सुबोध टीकेच्या रूपानें करीत आहेत. तरी सदर ग्रंथास सर्वांकडून उदार आश्रय देण्यांत यावा अशी प्रार्थना आहे. कळावें.

**परशुराम लक्ष्मण वैद्य**, एम्. ए. पी. एच्. डी.

संस्कृत भाषाध्यापक–वाडिया कॉलेज पुणें.

# ग्रंथकारापर्यंतची वंशावळ










---

* यांनीं विजापूर दरबार आदिलशाहीतून सनदा मिळविल्या असून त्या भारत इतिहास-संशोधक-मंडळ पुणे याच्या शके १८५२ च्या त्रैमासिकामध्यें छापल्या आहेत.

श्रीगणेशाय नमः ॥

# अथ पातञ्जलमहाभाष्यप्रारम्भः

( शास्त्रारम्भप्रतिज्ञाभाष्यम् )

## अथ शब्दानुशासनम् ॥

अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते । शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् ॥

---

श्रीः ।

### अर्थसंग्रहटीका ।

श्रीशेषशायी भगवाननन्तसुखदायकः ।
ध्येयः सदा च संसेव्यः सर्वसंपत्समृद्धये ॥
शिष्योऽयं भूतिकाराणां विदुषामग्रगामिनाम् ।
गोपालः कुरुते सम्यग् महाभाष्यार्थसंग्रहम् ॥

अथेति—शब्दानामनुशासनमिति विग्रहः । "कर्तृकर्मणोः कृति" इति षष्ठी । उभयोः प्रयोगाभादुभयप्राप्तौ कर्मणि चेत्यस्याप्रवृत्तेः कर्मणि चेति न समासनिषेधः । शब्दानां साधुशब्दानामित्यर्थः ।

( अनुशासनीयशब्दनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

केषां शब्दानाम् ?

( समाधानभाष्यम् )

लौकिकानां वैदिकानां च । तत्र लौकिकास्तावत्-गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति ॥ वैदिकाः खल्वपि-शं नो देवीरभिष्टये । इषे त्वोर्जे त्वा । अग्निमीळे पुरोहितम् । अग्न आयाहि वीतय इति ॥

( अ० सं० ) गौरिति—गौरश्व इत्यादिलौकिकानां शं नो देवी-त्यादिवैदिकानाञ्चानुशासनम् । असाधुशब्देभ्यो विवेकेन ज्ञानजनकं शास्त्रमित्यर्थः । अयमेतद्वाक्यघटकोऽथशब्दः प्रारभ्यत इत्यध्याहारे तात्पर्यग्राहकः ।

( आक्षेपभाष्यम् )

अथ गौरित्यत्र कः शब्दः ? ॥

( आक्षेपोपपादक भाष्यम् )

किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः ? ॥

( आक्षेपबाधकं भाष्यम् )

नेत्याह—द्रव्यं नाम तत् ॥

( आक्षेपोपपादकभाष्यम् )

यत्तर्हि तदिङ्गितं चेष्टितं निमिषितमिति स शब्दः ? ॥

( निराकरणभाष्यम् )

नेत्याह—क्रिया नाम सा ॥

( आक्षेपोपपादकभाष्यम् )

यत्तर्हि तच्छुक्लो नीलः कपिलः कपोत इति स शब्दः ? ॥

( निराकरणभाष्यम् )

नेत्याह—गुणो नाम सः ॥

( आक्षेपोपपादकभाष्यम् )

यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः ? ॥

( निराकरणभाष्यम् )

नेत्याह—आकृतिर्नाम सा ॥

( आक्षेपोपसंहारभाष्यम् )

कस्तर्हि शब्दः ? ॥

गौरिति बोधे विषयेषु अर्थेषु मध्ये कः शब्दपदवाच्यः । सास्ना-दिमत्तु द्रव्यमेव । चेष्टितादि क्रिया । शुक्लादिर्गुणः । यद्भिन्नेष्व-भिन्नं नाम-एकम् । छिन्नेष्वच्छिन्नं नाम नित्यं वस्तुत आकृतिरिति कोऽवशिष्यते । यः शब्दपदवाच्य इति चेत्-उच्यते ।

( समाधानभाष्यम् )

**येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्र-त्ययो भवति स शब्दः ॥**

येनेति—येन नादाभिव्यङ्गेन स्फोटाऽऽत्मकेन शब्देन सास्नादिमतां बोधो भवति स शब्दपदवाच्यो न द्रव्यादिः ।

( समाधानान्तरभाष्यम् )

**अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते । तद्यथा शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माण-वक इति ध्वनिं कुर्वन्नेव मुच्यते । तस्माद् ध्वनिः शब्दः ॥**

अथवेति—अर्थबोधकत्वेन लोके प्रसिद्धो वर्णरूपध्वनिसमूहः शब्दपदवाच्यः । अत एव शब्दं कुरु । मा शब्दं कार्षीः । शब्द-कार्ययं माणवक इति संगच्छते । अनेनानुबन्धचतुष्टयमुक्तम् ॥

( शब्दानुशासनशास्त्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**कानि पुनः शब्दानुशासनस्य प्रयोजनानि ? ॥**

कानीति—तत्र साधुशब्दो विषयः । तज्ज्ञानं प्रयोजनमित्युभयं निर्दिष्टम् । तज्जिज्ञासुरधिकारी । प्रतिपाद्यप्रतिपादकभावः सम्बन्ध इत्य-र्थाल्लभ्यते । प्रयोज्यप्रयोजनानीति तु रक्षादीनि वक्ष्यमाणानीति कैयट-विवरणकारौ । वस्तुतः साधवः शब्दास्तेषामसाधुभ्यो विवेको वा विषयो-ऽथ शब्दानुशासनमित्यनेन प्रदर्श्यते । प्रधानप्रयोजनान्येव रक्षादीनि । प्रयोजननिरूपणस्याध्ययनानुकूलप्रवृत्तिं प्रतीष्टसाधनत्वज्ञानजनन-मात्रेणैवार्थवत्त्वादध्ययनस्य विवेकज्ञानपर्यन्तत्वाज्ज्ञानस्याध्ययनान्त-

गतत्वेन प्रयोजनताया वक्तुमशक्यम् । एवं चानेन प्रथमं विषयं निरूप्य रक्षोहेत्यादिना विस्तरेण प्रयोजनानि प्रतिपाद्य ततः प्रभृति किं पुनरित्याक्षेपमुखेनाधिकारी निरूप्यत इति स्वरसत उपपद्यत इति गुरुचरणाः ।

(समाधानभाष्यम्)

**रक्षोहागमलघ्वसंदेहाः प्रयोजनम् ॥**

व्याकरणज्ञो हि वेदान् सम्यक् परिपालयति । अन्यश्च लोके लोपाद्यदृष्टं वेदे दृष्ट्वा भ्रमेण पाठान्तरं कल्पयेत् ।

(ऊहपदार्थनिरूपणभाष्यम्)

**ऊहः खल्वपि—न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः । ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः । तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् ॥**

ऊहेति—ऊहः सूर्याय त्वा जुष्टं निर्वपामीत्येवंरूपः प्रकृतिप्रत्ययज्ञानवता वैयाकरणेन सम्यक् कर्तुं शक्यते ।

(आगमपदार्थनिरूपणभाष्यम्)

**आगमः खल्वपि—ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति । प्रधानं च षट्स्वङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान्भवति ॥**

आगमेति—आगमविषये प्रयोजनशब्दः करणव्युत्पत्त्या प्रयोजकपरः । "नपुंसकमनपुंसक" इत्येकशेषः । तेनागमः प्रयोजकः प्रवर्तक इत्यर्थः । निष्कारणः दृष्टकारणमनपेक्ष्येत्यर्थः । षडङ्गो व्याकरणादिमुख्याङ्गसहित इत्यर्थः । वस्तुतस्तु—आगमपदं वेदबोधितपरम् । भवति च वेदबोधितफलं सन्ध्योपासनस्यैव प्रत्यवायपरिहाररूपं व्याकरणाध्ययनस्य । तथा च फलमेव प्रयोजनपदेन विवक्षणीयमिति गुरुचरणाः ।

(लघुपदार्थनिरूपणभाष्यम्)

**लघ्वर्थं चाध्येयं व्याकरणम् । ब्राह्मणेनावश्यं शब्दा ज्ञेया इति । नचान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या विज्ञातुम् ॥**

लघ्वेति—तत्र व्याकरणमन्तरा लघुनोपायेन सकलसाधुशब्दज्ञानमशक्यमिति लघ्वर्थं चाध्येयं व्याकरणम् ।

(असंदेहपदार्थनिरूपणभाष्यम्)

**असंदेहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति—स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति । तस्यां संदेहः—स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति । तां नावैयाकरणः स्वरतोऽध्यवस्यति—यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति ॥**

असंदेहेति—एवमसंदेहोऽपि व्याकरणाध्ययनस्य फलम् । वैयाकरणो हि स्थूलपृषतीमित्यादि स्वरतः समासार्थं जानाति । असंदेहार्थमित्यत्र नञा प्रागभाव उच्यते । यदि संदेहरूपं कार्यं स्यात्तर्हि तत्प्रागभावो नश्येत् । यद्वा नञात्यन्ताभाव एवोच्यते । व्याकरणज्ञानप्रयोज्यः संदेहात्यन्ताभाव इत्यर्थः । तस्य नित्यत्वेऽपि प्रयोज्यत्वं न विरुद्धम् । यथा वह्न्यभावप्रयोज्यो धूमाभाव इति ।

(व्याकरणाध्ययनसाधकागमप्रतीकभाष्यम्)

**इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि—तेसुराः । दुष्टः शब्दः । यदधीतम् । यस्तु प्रयुङ्क्ते । अविद्वांसः । विभक्तिं कुर्वन्ति । यो वा इमाम् । चत्वारि । उतत्वः । सक्तुमिव । सारस्वतीम् । दशम्यां पुत्रस्य । सुदेवोऽसि वरुण इति ॥**

इमानि च पुनः शब्दानुशासनस्यानुषङ्गिकाणि प्रयोजनानि पूर्वाणि तु मुख्यानि। अतो वर्गद्वयोपादानम्।

(भाष्यम्)

तेऽसुराः—

"तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः। तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः" म्लेच्छा मा भूमेत्यध्येयं व्याकरणम्॥ तेऽसुराः॥

न म्लेति—न म्लेच्छितवै इत्यस्यैव विवरणं नापभाषितवै। अयं निषेधो म्लेच्छभाषाविषय इति भ्रमनिवृत्त्यर्थम्।

(भाष्यम्)

दुष्टः शब्दः—

दुष्टः शब्दः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ इति॥

दुष्टाञ्छब्दान्मा प्रयुक्ष्महीत्यध्येयं व्याकरणम्॥

दुष्टः शब्दः॥

स्वरतेति—स्वरत इत्यत्राद्यादित्वात्तृतीयान्तात्तसिः। मिथ्याप्रयुक्तो यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन्नभिमतमर्थं नाहेत्यर्थः। वागेव वज्रः हिंसकत्वादित्यर्थः। स्वाहेन्द्रशत्रुर्वर्द्धस्वेति मन्त्रे इन्द्रस्य शत्रुरित्यर्थके अन्तोदात्ते इन्द्रशत्रुशब्दे प्रयोक्तव्ये इन्द्रः शत्रुर्यस्येत्यर्थकः प्रकृतिस्वरेणाद्युदात्तः प्रयुक्त इत्यर्थान्तराभिधानादिन्द्र एव वृत्तस्य शातयिता सम्पन्नः।

(भाष्यम्)

यदधीतम्—

"यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" ॥

तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम् ॥ यदधीतम् ॥

(भाष्यम्)

यस्तु प्रयुङ्क्ते—

"यस्तु प्रयुङ्क्ते कुशलो विशेषे
शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र
वाग्योगविद् दुष्यति चापशब्दैः ॥"

कः ? । वाग्योगविदेव ॥ कुत एतत् ? ॥

यो हि शब्दाञ् जानात्यपशब्दानप्यसौ जानाति । यथैव हि शब्दज्ञाने धर्मः एवमपशब्दज्ञानेऽप्यधर्मः । अथवा भूयानधर्मः प्राप्नोति । भूयांसोऽपशब्दाः, अल्पीयांसः शब्दा इति । एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । तद्यथा गौरित्यस्य शब्दस्य गावी गोणी गोता गोपातलिकेत्यादयो बहवोऽपभ्रंशाः । अथ योऽवाग्योगविद्, अज्ञानं तस्य शरणम् ॥

(बाधकभाष्यम्)

विषम उपन्यासः । नात्यन्तायाज्ञानं शरणं भवितुमर्हति यो ह्यजानन् वै ब्राह्मणं हन्यात्सुरां वा पिबेत्सोऽपि मन्ये पतितः स्यात् ।

दुष्यतीति—दुष्यति चापशब्दैरिति वाग्योगविदित्यर्थः । अपशब्दज्ञानमधर्मसाधनं धर्महेतुशब्दज्ञानविरोधित्वात् । यद् यद्विरोधि तत् तद्विरोधिफलजनकं श्लैष्मिकद्रव्यवदित्यनुमानप्रमाणेनापशब्दज्ञानस्य साधुशब्दादधिकतरासाधुशब्दज्ञानाद्वागयोगविदपि दुष्यतीत्यर्थः ।

अवाग्योगविदस्तु व्याघ्रादीनां ब्रह्महत्यादिदोषाभाव इवापशब्दज्ञानेऽपि दोषाभाव इति केचित् । वस्तुतस्तु अवाग्योगविदेव कर्ताध्याहार्यो दुष्यतीत्यत्र । यो ह्यजानन्नपि ब्राह्मणं हन्यात् सुरां वा पिबेत्सोऽपि पतित एव भवति ।

( सिद्धान्तव्याख्याभाष्यम् )

एवं तर्हि—

सोऽनन्तमाप्नोति जयं परत्र
वाग्योगविद् दुष्यति चापशब्दैः ॥

कः ? ॥

अवाग्योगविदेव । अथ यो वाग्योगवित्,
विज्ञानं तस्य शरणम् ॥

( आक्षेपभाष्यम् )

क पुनरिदं पठितम् ? ॥

( समाधानभाष्यम् )

भ्राजा नाम श्लोकाः ॥

( आक्षेपभाष्यम् )

किं च भोः श्लोका अपि प्रमाणम् ? ॥

किं चातः ? ॥

यदि श्लोका अपि प्रमाणम्, अयमपि श्लोकः प्रमाणं भवितुमर्हति—

“यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ॥
पीतं न गमयेत्स्वर्गं किं तत् क्रतुगतं नयेत्” इति ॥

( समाधानभाष्यम् )

प्रमत्तगीत एष तत्र भवतः । यस्त्वप्रमत्तगीतस्तत्प्रमाणम् ॥ यस्तु प्रयुङ्क्ते ॥

श्लोकेति—ननु श्लोकत्वावच्छेदेन प्रामाण्यमिति चेत्–यदुदुम्बरेति श्लोकस्यापि प्रामाण्यापत्तिः । विप्रतिपन्नत्वेनोक्ततया–अप्रमाणत्वात् । यस्तु प्रयुङ्क्ते इति श्लोकबोध्यार्थे "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति" इति श्रुत्यर्थोऽनुकूलः ।

(भाष्यम्)

**अविद्वांसः—**

**"अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः ।**
**कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥"**
**अभिवादे स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम् ॥**

**अविद्वांसः ॥**

(भाष्यम्)

**विभक्तिं कुर्वन्ति—**

**याज्ञिकाः पठन्ति–"प्रयाजाः सविभक्तिकाः कार्याः" इति । नचान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम् ॥ विभक्तिं कुर्वन्ति ॥**

याज्ञिकेति—समिधोऽग्न आज्यस्य व्यन्तु–इत्यादि प्रयाजेषूह्यमानेषु अग्निशब्दप्रकृतिकविभक्तियोजनमवैयाकरणस्य सम्यग् न भवतीति–अध्येयं व्याकरणम् ।

(भाष्यम्)

**यो वा इमाम्—**

**"यो वा इमां पदशः स्वरशोऽक्षरशश्च वाचं**
**विदधाति स आर्त्विजीनो भवति"**
**आर्त्विजीना स्यामेत्यध्येयं व्याकरणम् ॥**

**यो वा इमाम् ॥**

आर्त्वीति—यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानमिति वार्तिकेन ऋत्विग्च्छब्दात् खञ्प्रत्ययः । ऋत्विक्कर्मार्हतीति आर्त्विजीनो याजकः, ऋत्विगित्यर्थः ।

(भाष्यम्)

चत्वारि—

"चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्या आविवेश" इति ॥

चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च ॥ त्रयो अस्य पादाः । त्रयः काला भूतभविष्यद्वर्त्तमानाः ॥ द्वे शीर्षे । द्वौ शब्दात्मानौ नित्यः कार्यश्च ॥ सप्त हस्तासो अस्य । सप्तविभक्तयः । त्रिधा बद्धः । त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसीति ॥ वृषभो वर्षणात् ॥ रोरवीति शब्दं करोति ॥ कुत एतद् ? । रौतिः शब्दकर्मा ॥ महो देवो मर्त्यां । आविवेशेति । महान्देवः शब्दः ॥ मर्त्या मरणधर्माणो मनुष्यास्तानाविवेश । महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम् ॥

चत्वारीति—चत्वारि शृङ्गाणि । नामाख्यातोपसर्गनिपातपदजातानि । त्रयः पादाः भूतभविष्यद्वर्त्तमानास्त्रयः कालाः । द्वे शीर्षे नित्यानित्यशब्दरूपे । सप्तहस्ताः सप्तविभक्तिरूपाः । उरसि कण्ठे शिरसीति त्रिषु स्थानेषु बद्धः । कामानां वर्षणात् वृषभः, रोरवीति शब्दं करोति महान्देवः शब्दः मर्त्यां मनुष्यानाविवेश आविष्टः । आवेशफलश्च महता देवेन साम्यन्नाम सायुज्यं यथा स्यादित्यध्येयं व्याकरणम् ।

तदुक्तं हरिणा—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥

( भाष्यम् )

अपर आह—

"चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥"

'चत्वारि वाक्परिमिता पदानि' चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च ॥ 'तानि विदुर्ब्राह्मणा ये मनीषिणः' मनस ईषिणो मनीषिणः । 'गुहा त्रीणि निहिता नेङ्गयन्ति' गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते । न निमिषन्तीत्यर्थः ॥ 'तुरीयं वाचो मनुष्या वदन्ति ।' तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थः ॥ चत्वारि ॥

चत्वारीति—चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च प्रत्येकं परापश्यन्तीमध्यमावैखरीरूपास्तानि मनीषिणः मनस ईषिणः चित्तशुद्धिक्रमेण वशीकर्त्तारः वैयाकरणाः, तानि विदन्ति । गुहा अज्ञानं हृदयादिरूपा च तस्यां त्रीणि निहितानि परादीनां त्रयोंऽशा मध्यमान्ता निहिता इत्यर्थः । तानि च वैयाकरणः शास्त्रबलेन तद्धललब्धयोगेन व्याकरणप्रदीपेन च गुहान्धकारं विदार्य सर्वं जानातीत्यर्थः । तुरीयं वाचः वाक्सम्बन्धिचतुर्थभागं वैखरीरूपं मनुष्या अवैयाकरणा विदुः । तस्मात्सकलपदज्ञानाय मनीषित्वाय वा अध्येयं व्याकरणमिति शेषः ।

( भाष्यम् )

उत त्वः—

"उत त्वः पश्यन्न ददर्श वाच-
मुत त्वः शृण्वन्न शृणोत्येनाम् ।

उतो त्वस्मै तन्वं विसस्रे
जायेव पत्य उशती सुवासाः ॥"

उत त्वः अपि खल्वेकः पश्यन्नपि न पश्यति वाचम् । अपि खल्वेकः शृण्वन्नपि न शृणोत्येनामिति । अविद्वांसमाहार्द्धम् ॥ उतो त्वस्मै तन्वं विसस्रे तनुं विवृणुते ॥ जायेव पत्य उशती सुवासाः । तद्यथा—जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते, एवं वाग् वाग्विदे स्वात्मानं विवृणुते ॥ वाङ्नो विवृणुयादात्मानमित्यध्येयं व्याकरणम् ॥ उत त्वः ॥

उत त्वेति—त्वशब्दोऽन्यवाची । उतशब्दोऽप्यर्थः । उतशब्दस्त्वर्थ इत्यन्ये । अन्यस्तु वाचं पश्यन्नपि न ददर्श । प्रत्यक्षेण शब्दस्वरूपमुपलभमानोऽप्यर्थापरिज्ञानान्न पश्यतीत्यर्थः । अर्थपरिज्ञानफला हि वागित्यर्थः अन्यस्तु शृण्वन्नप्येनान्न शृणोतीत्यर्थः । य एव हि-अर्थं सम्यगवबुध्यते तेनैव हि सा सम्यक् श्रुता भवति । एवमर्द्धेनाविद्वांसं निन्दित्वा द्वितीयार्द्धेन विद्वांसं स्तौति । उतो-इति । उत उ-इति निपातसमाहारः । अथैकस्मै कस्मैचिद्वैयाकरणाय तन्वं शरीरं विसस्रे, विवृणोति प्रकाशयति । सम्यग् ज्ञानं हि-अर्थस्य प्रकाशनम् । अर्थो हि वाचः शरीरम् । यथा जाया पत्ये उशती नाम कामयमाना सुवासा निर्णिक्तवासा नीरजस्का स्वमात्मानमृतुकालेषु विवृणुते प्रकाशयति, यथा तत्पतिस्तां यथावत्पश्यति, शृणोति च तद्वचनार्थं नान्यदा घनपटप्रावृतशरीराम् । एवं वैयाकरण एनां वाचं पदशः प्रकृतिप्रत्ययविभागेन विगृह्यार्थमस्याः पश्यति शृणोति चेत्यर्थः । एतदर्थमध्येयं व्याकरणम् ।

(भाष्यम्)

सक्तुमिव—

सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत ।

अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

सक्तुः—सचतेर्दुर्धावो भवति, कसतेर्वा विपरीताद्विकसितो भवति । तितउ—परिपवनं भवति—ततवद्वा तुन्नवद्वा । धीरा ध्यानवन्तः । मनसा प्रज्ञानेन । वाचमक्रत वाचमकृषत । अत्रा सखायः सख्यानि जानते । अत्र सखायः सन्तः सख्यानि जानते ।

क ? ।

य एष दुर्गो मार्गः, एकगम्यो वाग्विषयः ॥

के पुनस्ते ? ।

वैयाकरणाः ॥

कुत एतत् ? ।

'भद्रैषां लक्ष्मीर्निहिताधि वाचि ।'

एषां वाचि भद्रा लक्ष्मीर्निहिता भवति ।

लक्ष्मीर्लक्षणाद्भासनात्परिवृढा भवति ॥

सक्तुमिव ॥

यत्रेति—यत्र व्याकरणे धीरा ध्यानवन्तः सन्तः तितउना सक्तुमिव ध्यानयुक्तमनसा वाचमक्रत । असाधुभ्यो विविक्तां कृतवन्तः । ते तत्करणेन च शुद्धचित्ताः । अत्र ब्रह्मप्रतिपादकशब्दे शब्दार्थयोरभेदबुद्ध्या सखायः समानख्यातयः, समानज्ञानाः । तच्छब्दे ब्रह्मैकत्वज्ञानवन्तस्तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्माभेदज्ञानवन्तः सख्यानि सायुज्यानि जानते प्राप्नुवन्तीत्यर्थः । यत एतेषां वाचि भद्रा लक्ष्मीः स्वप्रकाशब्रह्मरूपा अधि अधिकं निहिता स्थिता भवति । यतः सेचतेर्निष्पन्नः सक्तुशब्दः, अतो दुःशोध्यार्थप्रतिपादको भवतीत्यर्थः । तितउशब्दोऽस्माद्भाष्यात् नपुंसकः । 'चालनी तितउः

पुमा'निति कोशात्पुल्लिङ्गोऽपि । कसधातोश्चेत्सक्तुः तदा विकसितार्थक इत्यर्थः । तनातेर्डउः सन्वच्चेत्यनेन निष्पन्नस्तितउशब्दस्तदा विस्तारयुक्त इत्यर्थः । तुदधातोर्निष्पन्नस्तितउशब्दस्तुन्नवत्—अर्थात् बहुच्छिद्रमित्यर्थः । भाष्ये किं तद्यत्र सायुज्यानि प्राप्नुवन्ति—इति प्रश्नस्यायमाशयः—एष दुर्गो मार्गः । निर्विकल्पकज्ञानेनैवैकोपायेन लभ्यः । अत एव दुर्गत्वं "नान्यः पन्था विद्यतेऽयनाये"ति श्रुतिरिति भावः । वाग्विषया वाग्रूपेत्यर्थः । वाग्वेदरूपात्र । सर्वोऽपि वेदस्तेषां ब्रह्मपरो "वेदैश्च सर्वैरहमेव वेद्य" इत्युक्तमिति तात्पर्यम् ।

(भाष्यम्)

**सारस्वतीम्—**

**याज्ञिकाः पठन्ति—"आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्" इति ॥ प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम् ॥ सारस्वतीम् ॥**

प्रायश्चित्तीयेति—भवार्थे वृद्धाच्छप्रत्ययस्तद्धितः । अपशब्दप्रयोगप्रयुक्तपापशोधनाय कर्मणे हितास्तन्निमित्तोत्पादना मा भूमेत्यर्थः । क्रतोरन्यत्रापशब्दप्रयोगे न दोष इत्यन्यत्र विस्तरः ।

(भाष्यम्)

**दशम्यां पुत्रस्य—**

**याज्ञिकाः पठन्तिः—"दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद् घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम् । तद्धि प्रतिष्ठिततमं भवति । द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्"—इति ॥ नचान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् ॥ दशम्यां पुत्रस्य ॥**

नामेति—नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषाः पित्रादयस्तान्—अनुकायति—अभिधत्ते इति त्रिपुरुषानूकम् ।

अन्येषामपि दृश्यत इति दीर्घः । अनरीति—अरिभिन्ने अमनुष्ये देवरूपे इति वार्थः ।

( भाष्यम् )

सुदेवोऽसि—

"सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥"

सुदेवो असि वरुण सत्यदेवोऽसि । यस्य ते सप्त सिन्धवः सप्त विभक्तयः । अनुक्षरन्ति काकुदम् । काकुदं तालु । काकुर्जिह्वा, सास्मिन्नुद्यत इति काकुदम् । सूर्म्यं सुषिरामिव । तद्यथा—शोभनामूर्मिं सुषिरामग्निरन्तः प्रविश्य दहति, एवं ते सप्त सिन्धवः सप्त विभक्तयस्ताल्वनुक्षरन्ति । तेनासि सत्यदेवः ॥ सत्यदेवाः स्यामेत्यध्येयं व्याकरणम् ॥ सुदेवो असि ॥

यस्येति—यस्मादित्यर्थः । यस्मात्ते काकुदं तालु प्राप्य सिंधवः सप्तसमुद्ररूपाः, सप्तविभक्तयः अनुक्षरन्ति प्रकाशन्ते । सूर्मिं शोभनामयःप्रतिमां सुषिरां सच्छिद्राम् । अन्तःप्रविश्याग्निर्यथा तत्रत्यं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति, एवं तालुदेशे प्रकाशं प्राप्य विभक्त्यन्ताः शब्दाः शारीरपापम्—अपाकुर्वन्तीत्यर्थः ।

( उक्तप्रयोजनग्रन्थोपपत्तिप्रकरणम् )

( आक्षेपभाष्यम् )

किं पुनरिदं व्याकरणमेवाधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते, न पुनरन्यदपि किंचित् ? । ॐ–इत्युक्त्वा वृत्तान्तशः शमित्येवमादीन् शब्दान्पठन्ति ॥

किं पुनर्व्याकरणमधिजिगांसमानेभ्य इदं प्रयोजनमन्वाख्यायते ? उत वेदमधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते ? । यदि च ॐ इत्यभ्युपगम्य शन्नोदेवीत्यादिशब्दान्पठन्ति । अर्थात्तेभ्योऽपीदं प्रयोजनमन्वाख्येयम् । एवञ्च व्याकरणमधिजिगांसमानेभ्यः

प्रयोजनमन्वाख्यायते चेत्—वेदमधिजिगांसमानेभ्यः किमिति प्रयोजनं नान्वाख्यातम्? । यथाच वेदाध्ययनं प्रयोजनमन्तरैव करिष्यन्ति, तथा व्याकरणाध्ययनमपि प्रयोजनमन्तरैव करिष्यन्तीति प्रयोजनविचारोऽत्र व्यर्थं इति चेत्—उच्यते ।

(समाधानभाष्यम्)

पुराकल्प एतदासीत्-संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते ॥ तदद्यत्वे न तथा । वेदमधीत्य त्वरिता वक्तारो भवन्तिः—

'वेदान्नो वैदिकाः शब्दाः

सिद्धालोकाच्च लौकिकाः ।'

अनर्थकं व्याकरणम्—इति । तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृद् भूत्वा आचार्य इदं शास्त्रमन्वाचष्टे-इमानि प्रयोजनानीत्यध्येयं व्याकरणम्—इति ॥

पुराकल्पेति—युगान्तरे ब्राह्मणाः संस्कारोत्तरकालमेव व्याकरणमधीयते स्म । तेभ्यो—व्याकरणज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते । तदानीं ते बाल्यात्प्रष्टुमसमर्था इति न प्रयोजनमन्वाख्येयं वेदाध्ययनस्य । अस्मिन्युगे तु स्वल्पायुष्ट्वात्पूर्वं प्रधानं वेदमधीयते, ततः प्रष्टुं समर्थत्वाद्व्याकरणाध्ययनस्य प्रयोजनं पृच्छन्ति । यथा वेदान्न इति । तेभ्य—इदं शास्त्रमन्वाचष्टे । इमानि च प्रयोजनानीति ।

(अनुबन्धचतुष्टयोपसंहारभाष्यम्)

उक्तः शब्दः । स्वरूपमप्युक्तम् । प्रयोजनान्यप्युक्तानि ॥

(इत्यनुबन्धचतुष्टयनिरूपणम् ॥)

(अथ शास्त्रनिर्माणरीतिनिरूपणाधिकरणम्)

(आक्षेपभाष्यम्)

शब्दानुशासनमिदानीं कर्तव्यम् । तत्कथं कर्तव्यम्?

किं शब्दोपदेशः कर्तव्यः, आहोस्विदपशब्दोपदेशः, आहोस्विदुभयोपदेश? इति॥

(समाधानभाष्यम्)

अन्यतरोपदेशेन कृतं स्यात्। तद्यथा—भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते। 'पञ्च पञ्चनखा भक्ष्याः' इत्युक्ते गम्यत एतद्—अतोऽन्येऽभक्ष्या इति॥ अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः। तद्यथा 'अभक्ष्यो ग्राम्यकुक्कुटः अभक्ष्यो ग्राम्यसूकरः' इत्युक्ते गम्यत एतद्—आरण्यो भक्ष्य इति॥ एवमिहापि। यदि तावच्छब्दोपदेशः क्रियते, गौरित्येतस्मिन्नुपदिष्टे गम्यत एतद्—गाव्यादयोऽपशब्दा इति। अथाप्यपशब्दोपदेशः क्रियते, गाव्यादिषूपदिष्टेषु गम्यत एतद्—गौरित्येष शब्द—इति॥

(आक्षेपभाष्यम्)

किं पुनरत्र ज्यायः?॥

(समाधानभाष्यम्)

लघुत्वाच्छब्दोपदेशः।

लघीयाञ्छब्दोपदेशः। गरीयानपशब्दोपदेशः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद्यथा—गौरित्यस्य शब्दस्य गावीगोणीगोतागोपोतलिकेत्येवमादयोऽपभ्रंशाः। इष्टान्वाख्यानं खल्वपि भवति॥

(आक्षेपभाष्यम्)

अथैतस्मिञ्शब्दोपदेशे सति किं शब्दानां प्रतिपत्तौ प्रतिपदपाठः कर्तव्यः। गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इत्येवमादयः शब्दाः पठितव्याः?॥

(समाधानभाष्यम्)

नेत्याह। अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः॥ एवं हि श्रूयते—"बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं

प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम" ॥ बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालो नचान्तं जगाम, किं पुनरद्यत्वे ? यः सर्वथा चिरंजीवति, वर्षशतं जीवति । चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति–आगमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति । तत्र चास्यागमकाले- नैवायुः कृत्स्नं पर्युपयुक्तं स्यात् । तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः ॥

( आक्षेपभाष्यम् )

कथं तर्हीमे शब्दाः प्रतिपत्तव्याः ? ॥

( समाधानभाष्यम् )

किंचित्सामान्यविशेषवल्लक्षणं प्रवर्त्यम् । येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन् ॥ किं पुन- स्तत् ? ॥ उत्सर्गापवादौ कश्चिदुत्सर्गः कर्तव्यः, कश्चि- दपवादः ॥

( आक्षेपभाष्यम् )

कथंजातीयकः पुनरुत्सर्गः कर्तव्यः, कथंजातीयकोऽ- पवादः ? ॥

( समाधानभाष्यम् )

सामान्येनोत्सर्गः कर्तव्यः । तद्यथा—"कर्मण्यण्" तस्य विशेषेणापवादः । तद्यथा—"आतोऽनुपसर्गे कः" ॥

( जातिव्यक्तिपदार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

किं पुनराकृतिः पदार्थः, आहोस्विद्द्रव्यम् ? ॥

( समाधानभाष्यम् )

उभयमित्याह ॥

कथं ज्ञायते ? ॥

उभयथा ह्याचार्येण सूत्राणि पठितानि । आकृतिं पदार्थं मत्वा "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" इत्युच्यते । द्रव्यं पदार्थं मत्वा "सरूपाणाम्" इत्येकशेष आरभ्यते ॥

( शब्दनित्यत्वानित्यत्वविचारभाष्यम् )

( आक्षेपभाष्यम् )

किं पुनर्नित्यः शब्दः, आहोस्वित्कार्यः ? ॥

( समाधानभाष्यम् )

संग्रह एतत्प्राधान्येन परीक्षितम्—नित्यो वा स्यात्कार्यो वेति । तत्रोक्ता दोषाः, प्रयोजनान्यप्युक्तानि । तत्र त्वेष निर्णयः—यद्येवं नित्यः, अथापि कार्यः, उभयथापि लक्षणं प्रवर्त्यमिति ॥

( आक्षेपभाष्यम् )

कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम् ?—

( आक्षेपसाधकवार्त्तिकप्रथमखण्डम् ॥ १ ॥ )

॥ सिद्धे शब्दार्थसम्बन्धे ॥

( व्याख्याभाष्यम् )

सिद्धे शब्देऽर्थे सम्बन्धे चेति ॥

( आक्षेपभाष्यम् )

अथ सिद्धशब्दस्य कः पदार्थः ? ॥

( समाधानभाष्यम् )

नित्यपर्यायवाची सिद्धशब्दः ॥ कथं ज्ञायते ? ॥ यत्कूटस्थेष्वविचालिषु भावेषु वर्तते । तद्यथा—सिद्धा द्यौः, सिद्धा पृथिवी, सिद्धमाकाशमिति ॥

सिद्धेति—शब्दश्चार्थश्च सम्बन्धश्चेति समाहारद्वन्द्वः। सिद्धे नित्ये—इत्यर्थः। स्पष्टं चेदं संग्रहे। अथवा—अब्भक्षन्यायेन सिद्ध एव न साध्य इत्यर्थः। अथवा—अत्यन्तसिद्धः सिद्ध इति पूर्वपदलोपः।

(आक्षेपभाष्यम्)

ननु च भोः कार्येष्वपि वर्तते। तद्यथा—सिद्ध ओदनः, सिद्धः सूपः, सिद्धा यवागूरिति। यावता कार्येष्वपि वर्तते, तत्र कुत एतन्नित्यपर्यायवाचिनो ग्रहणम्, न पुनः कार्ये यः सिद्धशब्द इति?॥

(समाधानभाष्यम्)

संग्रहे तावत्कार्यप्रतिद्वंद्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति इहापि तदेव॥

(समाधानान्तरभाष्यम्)

अथवा सन्त्येकपदान्यप्यवधारणानि तद्यथा—अब्भक्षो वायुभक्ष इति—अप एव भक्षयति, वायुमेव भक्षयतीति गम्यते। एवमिहापि सिद्ध एव न साध्य इति॥

(समाधानान्तरभाष्यम्)

अथवा पूर्वपदलोपोऽत्र द्रष्टव्यः। अत्यन्तसिद्धः सिद्ध इति। तद्यथा—देवदत्तो दत्तः, सत्यभामा भामेति॥

(समाधानान्तरभाष्यम्)

अथवा व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्—इति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः॥

अथवेति—व्याख्यानान्नित्यपर्यायवाचिनो ग्रहणमिति।

(आक्षेपभाष्यम्)

किं पुनरनेन वर्ण्येन? किं न महता कण्ठेन नित्यशब्द एवोपात्तः यस्मिन्नुपादीयमानेऽसंदेहः स्यात्?॥

नित्यशब्देति—नच व्याख्यानादिज्ञानगौरवाद्यपेक्षया नित्यशब्द एव कुतो नोपात्त? इति वाच्यम् ।

(समाधानभाष्यम्)

**मङ्गलार्थम् ॥**

**माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्ध-शब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति ॥**

माङ्गलिकेति—मङ्गलार्थं सिद्धशब्दस्योपादानात् ।

(समाधानभाष्यशेषभाष्यम्)

**अयं खलु नित्यशब्दो नावश्यं कूटस्थेष्वविचालिषु भावेषु वर्तते ॥**

**किं तर्हि? ॥**

**आभीक्ष्ण्येऽपि वर्तते । तद्यथा नित्यप्रहसितो नित्यप्रजल्पित इति । यावताभीक्ष्ण्येऽपि वर्तते तत्राप्यनेनैवार्थः स्यात्—"व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति पश्यति त्वाचार्यो मङ्गलार्थश्चैव सिद्धशब्द आदितः प्रयुक्तो भविष्यति, शक्ष्यामि चैनं नित्यपर्यायवाचिनं वर्णयितुमिति । अतः सिद्धशब्द एवोपात्तो न नित्यशब्दः ॥**

कूटेति—तस्य कूटस्थाविचालिपदार्थबोधकत्वे व्याख्यानस्यैवापेक्षितत्वेन—एका क्रिया द्व्यर्थकरी प्रसिद्धेति न्यायेन सिद्धशब्दस्योपादानात् ।

(नित्यतासाधकपक्षनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

**अथ कं पुनः पदार्थं मत्वा एष विग्रहः क्रियते—सिद्धे शब्देऽर्थे सम्बन्धे चेति? ॥**

( समाधानभाष्यम् )

आकृतिमित्याह ॥

कुत एतत् ? ॥

आकृतिर्हि नित्या द्रव्यमनित्यम् ॥

( आक्षेपभाष्यम् )

अथ द्रव्ये पदार्थे कथं विग्रहः कर्तव्यः ? ॥

( समाधानभाष्यम् )

सिद्धे शब्दे अर्थसम्बन्धे चेति। नित्यो ह्यर्थवतामर्थैरभिसम्बन्धः ॥

( द्रव्यपदार्थाभ्युपगमभाष्यम् )

अथवा द्रव्य एव पदार्थे एष विग्रहो न्याय्यः ।—सिद्धे शब्दे अर्थे सम्बन्धे चेति। द्रव्यं हि नित्यमाकृतिरनित्या ॥

कथं ज्ञायते ? ।

एवं हि दृश्यते लोके मृत् कयाचिदाकृत्या युक्ता पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते, घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते। तथा सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते, रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते, कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते । पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः। आकृतिरन्या चान्या च भवति, द्रव्यं पुनस्तदेव। आकृत्युपमर्देन द्रव्यमेवावशिष्यते ॥

( आकृतिपदार्थाभ्युपगमभाष्यम् )

आकृतावपि पदार्थ एष विग्रहो न्याय्यः—सिद्धे शब्दे अर्थे सम्बन्धे चेति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—आकृतिरनित्या—इति ॥

( समाधानभाष्यम् )

नैतदस्ति । नित्याऽऽकृतिः ॥

कथम् ?

न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति । द्रव्यान्तरस्था तूपलभ्यते ॥

( समाधानसाधकनित्यलक्षणभाष्यम् )

अथवा नेदमेव नित्यलक्षणम्—ध्रुवंकूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यमिति । तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते ॥

किं पुनस्तत्त्वम् ? ॥

तस्य भावस्तत्त्वम् ॥ आकृतावपि तत्त्वं न विहन्यते ॥

( नित्यानित्यत्वविचारस्याप्रकृतत्वबोधकभाष्यम् )

अथवा किं न एतेन—इदं नित्यमिदमनित्यमिति । यन्नित्यं तं पदार्थं मत्वैष विग्रहः क्रियते—सिद्धे शब्देऽर्थे सम्बन्धे चेति ॥

( प्रत्याक्षेपभाष्यम् )

कथं पुनर्ज्ञायते—सिद्धः शब्दोऽर्थः सम्बन्धश्चेति ? ॥

( प्रत्याक्षेपसमाधानवार्त्तिकम् )

॥ लोकतः ॥

( भाष्यम् )

यल्लोकेऽर्थमर्थमुपादाय शब्दान्प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति । ये पुनः कार्या भावा निर्वृत्तौ तावत्तेषां यत्नः क्रियते । तद्यथा—घटेन कार्यं करिष्यन् कुंभकारकुलं गत्वाह—कुरु घटं कार्यमनेन करिष्यामीति । न तद्वच्छब्दान्प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाह—कुरु शब्दान्प्रयोक्ष्य इति । तावत्येवार्थमुपादाय शब्दान्प्रयुञ्जते ॥

ननु सिद्धपदेन आकृतिर्द्रव्यं वा ? । नाद्यः । मृत्सुवर्णादिस्थले-आकृतिनाशदर्शनात् । नान्त्यः । द्रव्यानित्यत्वस्य प्रत्यक्षसिद्धत्वेन सर्वाभिमतत्वादिति चेत् । न । अवयवसन्निवेशरूपाकृतेरनित्यत्वेऽपि जातिरूपायास्तस्या नित्यत्वे बाधकानुपलम्भात् ।

( आक्षेपोपसंहारभाष्यम् )

**यदि तर्हि लोक एषु प्रमाणं, किं शास्त्रेण क्रियते ? ॥**

( १ समाधानभूतं तृतीयखण्डम् )

**॥ लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः ॥**

( भाष्यम् )

**लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते ॥**

**किमिदं धर्मनियम इति ? ॥**

**धर्माय नियमो धर्मनियमः, धर्मार्थो वा नियमो धर्मनियमः, धर्मप्रयोजनो वा नियमो धर्मनियमः ॥**

सिद्धे शब्दार्थसंबन्धे—इत्येकं वाक्यम् । लोकत इति द्वितीयम् । लोकत इत्यस्यावृत्त्या लोकतोऽर्थप्रयुक्त इति तृतीयम् । अर्थेनात्मप्रत्यायनाय प्रयुक्तोऽर्थप्रयुक्त इत्यर्थः । धर्माय नियम इति चतुर्थ्या तादर्थ्यस्य षष्ठ्यर्थत्वं प्रतिपाद्यते । चतुर्थीतत्पुरुषस्यात्र न विधानम् । विग्रहस्तु धर्मस्य नियम इति ।

( १ वार्तिकचतुर्थखण्डम् )

**॥ यथा लौकिकवैदिकेषु ॥**

( भाष्यम् )

**प्रियतद्धिता दाक्षिणात्याः—यथा लोके वेदे चेति प्रयोक्तव्ये यथा लौकिकवैदिकेष्विति प्रयुञ्जते। अथवा युक्त एवात्र तद्धितार्थः । यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ॥**

लोके तावद् अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकर इत्युच्यते। भक्ष्यं च नाम क्षुत्प्रतिघातार्थमुपादीयते। शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम् । तत्र नियमः क्रियते—इदं भक्ष्यमिदमभक्ष्यमिति ॥ तथा—खेदात्स्त्रीषु प्रवृत्तिर्भवति। समानश्च खेदविगमो गम्यायां चागम्यायाश्च । तत्र नियमः क्रियते—इयं गम्येयमगम्येति ॥

(भाष्यम्)

वेदे खल्वपि—"पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्य आमिक्षाव्रतो वैश्यः" इत्युच्यते। व्रतं च नामाभ्यवहारार्थमुपादीयते। शक्यं चानेन शालिमांसादीन्यपि व्रतयितुम्। तत्र नियमः क्रियते।

तथा "बैल्वः खादिरो वा यूपः स्यात्" इत्युच्यते। यूपश्च नाम पश्वनुबन्धार्थमुपादीयते । शक्यं चानेन यत्किंचिदेव काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुम् । तत्र नियमः क्रियते।

तथा "अग्नौकपालान्यधिश्रित्याभिमन्त्रयते—भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्वम्" इति । अन्तरेणापि मन्त्रमग्निर्दहनकर्मा कपालानि सन्तापयति । तत्र च नियमः क्रियते—एवं क्रियमाणमभ्युदयकारि भवतीति ॥

(दार्ष्टान्तिकमुपसंहारभाष्यम्)

एवमिहापि समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयो नापशब्देनेति ॥ एवं क्रियमाणमभ्युदयकारि भवतीति ॥

इति शास्त्रस्य धर्मजनकताधिकरणम् ॥

( अनुपलब्धप्रयोगसाधुशब्दसाधकशास्त्रसार्थक्याधिकरणम् )

( आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ अस्त्यप्रयुक्तः ॥

( भाष्यम् )

सन्ति वै शब्दा अप्रयुक्ताः । तद्यथा—ऊष, तेर, चक्र, पेचेति ॥

किमतो यत्सन्त्यप्रयुक्ताः ? ॥

प्रयोगाद्धि भवाञ्छब्दानां साधुत्वमध्यवस्यति ॥

य इदानीमप्रयुक्ता नामी साधवः स्युः ॥

( आक्षेपासंगतिभाष्यम् )

इदं तावद्विप्रतिषिद्धम्—यदुच्यते—सन्ति वै शब्दा अप्रयुक्ता इति । यदि सन्ति नाप्रयुक्ताः, अथाप्रयुक्ता न सन्ति, सन्ति चाप्रयुक्ताश्चेति विप्रतिषिद्धम् । प्रयुञ्जान एव खलु भवानाह—सन्ति वै शब्दा अप्रयुक्ता इति । कश्चेदानीमन्योभवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यात् ?

( आक्षेपासङ्गतिबाधकभाष्यम् )

नैतद्विप्रतिषिद्धम् । सन्तीति तावद्ब्रूमः । यदेताञ्शास्त्रविदः शास्त्रेणानुविदधते ॥ अप्रयुक्ता इति ब्रूमः । यल्लोकेऽप्रयुक्ता इति ॥ यदप्युच्यते—कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधु स्यात् इति । न ब्रूमोऽस्माभिरप्रयुक्ता इति ॥

किं तर्हि ? ॥

लोकेऽप्रयुक्ता इति ॥

( आक्षेपभाष्यम् )

ननु च भवानप्यभ्यन्तरो लोके ॥

( समाधानभाष्यम् )

अभ्यन्तरोऽहं लोके, न त्वहं लोकः ॥

( आक्षेपबाधकवार्तिकम् )

अस्त्यप्रयुक्त इति चेन्नार्थे शब्दप्रयोगात् ॥

( भाष्यम् )

अस्त्यप्रयुक्त इति चेत् । तन्न ॥ किं कारणम् ? ॥

अर्थे शब्दप्रयोगात् । अर्थे शब्दाः प्रयुज्यन्ते । सन्ति चैषां शब्दानामर्था येष्वर्थेषु प्रयुज्यन्ते ॥

( आक्षेपसाधकवार्तिकम् )

॥ अप्रयोगः प्रयोगान्यत्वात् ॥

( भाष्यम् )

अप्रयोगः खल्वप्येषां शब्दानां न्याय्यः ॥ कुतः ? ॥ प्रयोगान्यत्वाद् । यदेषां शब्दानामर्थेऽन्यान्शब्दान्प्रयुञ्जते । तद्यथा—ऊषेत्यस्य शब्दस्यार्थे—क्व यूयमुषिताः, तेरेत्यस्यार्थे—क्व यूयं तीर्णाः, चक्रेत्यस्यार्थे—क्व यूयं कृतवन्तः । पेचेत्यस्यार्थे—क्व यूयं पक्वन्त इति ॥

( सिद्धान्तसमानवार्तिकम् )

॥ अप्रयुक्ते दीर्घसत्रवत् ॥

( भाष्यम् )

यद्यप्यप्रयुक्ताः अवश्यं दीर्घसत्रवल्लक्षणेनानुविधेयाः । तद्यथा—दीर्घसत्राणि वार्षशतिकानि वार्षसहस्रिकाणि च । न चाद्यत्वे कश्चिदप्याहरति । केवलमृषिसंप्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते ॥

अर्थेति—ननु अर्थे शब्दप्रयोगादेतेषामर्थस्य सद्भावेन तद्बोधनायैषां सत्तानुमानादप्रयुक्तत्वमसिद्धमिति चेत् । न । एतदर्थबोधकानामन्येषां शब्दानां सत्त्वेन—एतदनुमाने प्रमाणाभावात् । अप्रयुक्तेऽपि दीर्घसत्रवच्छात्रेण तदन्वाख्याने प्रयत्नः कार्यः । दीर्घसत्राणि वर्षशतादि-

साध्यानि—अद्यत्वे कर्तुमशक्यान्यपि केवलमृषिसंप्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते ।

( सिद्धान्तसमानवार्तिकम् )

॥ सर्वे देशान्तरे ॥

( भाष्यम् )

सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते ॥

( आक्षेपभाष्यम् )

न चैवोपलभ्यन्ते ॥

उपलब्धौ यत्नः क्रियन्ताम् ॥ महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदः वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य 'सन्त्यप्रयुक्ता' इति वचनं केवलं साहसमात्रमेव ॥

एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एवैनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु ॥

ये चाप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते ॥ क ? ॥ वेदे । तद्यथा—"सप्तास्ये रेवतीरेव दूष, यद्वो रेवतीरेवत्यां तमूष, यन्मे नरः श्रुत्यं ब्रह्म चक्र यत्रा नश्चक्रा जरसं तनूनाम्" इति ॥

( इति शास्त्ररचनावश्यकत्वनिरूपणम् )

( अथ शब्दज्ञानस्य धर्मजनकताधिकरणम् )

( आक्षेपभाष्यम् )

किं पुनः—शब्दस्य ज्ञाने धर्मः, आहोस्वित्प्रयोगे ? ॥

( प्रत्याक्षेपभाष्यम् )

कश्चात्र विशेषः ? ॥

( ज्ञानपक्षदूषणवार्तिकम् )

॥ ज्ञाने धर्म इति चेत्तथाऽधर्मः ॥

( भाष्यम् )

ज्ञाने धर्म इति चेत्तथाऽधर्मोऽपि प्राप्नोति । यो हि शब्दाञ् जानात्यपशब्दानप्यसौ जानाति । यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्मः ॥

( अधर्माधिक्यभाष्यम् )

अथवा भूयानधर्मः प्राप्नोति । भूयांसो ह्यपशब्दा अल्पीयांसः शब्दाः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा गौरित्यस्य गावीगोणीगोतागोपोतलिकेत्येवमादयोऽपभ्रंशाः ॥

( ज्ञानपक्षेदूषणान्तरवार्तिकम् )

॥ आचारे नियमः ॥

( भाष्यम् )

आचारे पुनर्ऋषिर्नियमं वेदयते—"तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः" इति ॥

इति ज्ञानपक्षनिराकरणम् ॥

( अथ प्रयोगपक्षाङ्गीकारभाष्यम् )

अस्तु तर्हि प्रयोगे ॥

( प्रयोगपक्षे दूषणवार्तिकम् )

॥ प्रयोगे सर्वलोकस्य ॥

यदि प्रयोगे धर्मः, सर्वो लोकोऽभ्युदयेन युज्येत ॥

(आक्षेपभाष्यम्)

कश्चेदानीं भवतो मत्सरो यदि सर्वो लोकोऽभ्युदयेन युज्येत ? ॥

(समाधानभाष्यम्)

न खलु कश्चिन्मत्सरः । प्रयत्नानर्थक्यं तु भवति । फलवता च नाम प्रयत्नेन भवितव्यम् । न च प्रयत्नः फलाद्व्यतिरेच्यः ॥

(समाधानबाधकभाष्यम्)

ननु च ये कृतप्रयत्नास्ते साधीयःशब्दान्प्रयोक्ष्यन्ते त एव साधीयोऽभ्युदयेन योक्ष्यन्ते ॥

(समाधानसाधकभाष्यम्)

व्यतिरेकोऽपि वै लक्ष्यते । दृश्यन्ते हि कृतप्रयत्नाश्चा-प्रवीणाः । तत्र फलव्यतिरेकोऽपि स्यात् ॥

(पक्षद्वयनिराकरणोपसंहारभाष्यम्)

एवं तर्हि—नापि ज्ञान एव धर्मो नापि प्रयोग एव ॥

किं तर्हि ?

(१० सिद्धान्तसमाधानवार्तिकम् ४)

॥ शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन ॥

(भाष्यम्)

शास्त्रपूर्वकं यः शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यते । तत्तुल्यं वेदशब्देन । वेदशब्दा अप्येवमभिवदन्ति । "योऽग्निष्टोमेन यजते य उ चैनमेवं वेद" "योऽग्निं नाचि-केतं चिनुते य उ चैनमेवं वेद" ॥

(व्याख्यान्तरभाष्यम्)

अपर आह—तत्तुल्यं वेदशब्देनेति । यथा वेदशब्दा

नियमपूर्वमधीताः फलवन्तो भवन्त्येवं यः शास्त्रपूर्वकं शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यत इति ॥

किमिति—ननु किं पुनः शब्दज्ञाने धर्मः, आहोस्वित्प्रयोगे ? । नाद्यः । अपशब्दज्ञानपूर्वकत्वाच्छब्दज्ञानस्यैकैकस्य शब्दस्य बह्वपभ्रंशसत्त्वाच्छब्दज्ञाने किंचिद्धर्मोपत्तावपि बह्वधर्मोत्पत्तिप्रसङ्गात् । नान्त्यः । तेऽसुराहेलयोहेलहेलय इति कुर्वन्तः पराबभूवुरिति प्रयोगेणैवाधर्मोत्पत्तेर्वेदबोधितत्वेऽपि व्याकरणानभिज्ञस्यापि प्रयोगमात्रेण धर्मोत्पत्त्या प्रयत्नानर्थक्यप्रसङ्गात् । एवञ्च न केवलं ज्ञाने धर्मो नापि प्रयोगे, किन्तु शब्दज्ञानपूर्वके शब्दप्रयोगे धर्मोत्पत्तिः । तदुक्तं वार्तिके शास्त्रपूर्वकेति ।

( प्रथमपक्षाभ्युपगमभाष्यम् )

अथवा पुनरस्तु ज्ञान एव धर्म इति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तं ज्ञाने धर्म इति चेत्तथाऽधर्म इति ॥

( आक्षेपनिराकरणभाष्यम् )

नैष दोषः, शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम् । शब्दश्च शब्दज्ञाने धर्ममाह, नापशब्दज्ञानेऽधर्मम् । यच्च पुनरशिष्टाप्रतिषिद्धम्, नैव तद्दोषाय भवति नाभ्युदयाय । तद्यथा—हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति, नाभ्युदयाय ॥

( समाधानान्तरभाष्यम् )

अथवाभ्युपाय एवापशब्दज्ञानं शब्दज्ञाने । यो ह्यपशब्दाञ्जानाति शब्दानप्यसौ जानाति । तदेवं 'ज्ञाने धर्मः' इति ब्रुवतोऽर्थादापन्नं भवति—'अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्मः' इति ॥

( समाधानान्तरभाष्यम् )

अथवा कूपखानकवदेतद्भविष्यति । तद्यथा—कूपखा-

नकः कूपं खनन्यद्यपि मृदा पांसुभिश्चावकीर्णो भवति। सोऽप्सु संजातासु तत एव तं गुणमासादयति। येन च स दोषो निर्हण्यते; भूयसा चाभ्युदयेन योगो भवति॥ एवमिहापि यद्यपशब्दज्ञानेऽधर्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन च स दोषो निर्घानिष्यते भूयसा चाभ्युदयेन योगो भविष्यति॥

(द्वितीयदूषणनिरासभाष्यम्)

यद्यप्युच्यते—आचारे नियम इति॥

याज्ञे कर्मणि स नियमोऽन्यत्रानियमः। एवं हि श्रूयते—'यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परापरज्ञा विदितवेदितव्या अधिगतयाथातथ्याः।' ते तत्रभवन्तो यद्वानस्तद्वा न इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे पुनः कर्मणि नापभाषन्ते॥ तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितम्, ततस्ते पराभूताः॥

इति शब्दज्ञानस्य धर्मजनकतानिर्णयप्रकरणम्।

(अथ व्याकरणपदार्थनिरूपण आक्षेपभाष्यम्)

अथ व्याकरणमित्यस्य कः पदार्थः॥

सूत्रम्॥

(सूत्रपक्षे आक्षेपवार्तिकम्)

॥ सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः॥

(भाष्यम्)

सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते—'व्याकरणस्य सूत्रम्' इति॥ किं हि तदन्यत्सूत्राद् व्याकरणम्, यस्यादः सूत्रं स्यात्॥

(आक्षेपान्तरवार्तिकम्)

॥ शब्दाप्रतिपत्तिः॥

( भाष्यम् )

शब्दानां चाप्रतिपत्तिः प्राप्नोति—'व्याकरणाच्छब्दान्प्रतिपद्यामहे' इति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते॥

किं तर्हि ? ॥

व्याख्यानतश्च ॥

( आक्षेपसाधकभाष्यम् )

ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति ॥

( आक्षेपबाधकभाष्यम् )

न केवलानि चर्चापदानि व्याख्यानम्—वृद्धिः, आत्, ऐज् इति ॥

किं तर्हि ? ॥

उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति ॥

( पक्षान्तरभाष्यम् )

एवं तर्हि शब्दः ।

( आक्षेपवार्तिकम् )

॥ शब्दे ल्युडर्थः ॥

( भाष्यम् )

यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते—व्याक्रियन्ते शब्दा अनेनेति व्याकरणम् । नहि शब्देन किंचिद् व्याक्रियते ॥

केन तर्हि ? ॥

सूत्रेण ॥

( आक्षेपान्तरवार्तिकम् )

॥ भवे च तद्धितः ॥

( भाष्यम् )

भवे च तद्धितो नोपपद्यते । व्याकरणे भवो योगो वैयाकरणः, इति । नहि शब्दे भवो योगः ॥

क्व तर्हि ? सूत्रे ॥

( आक्षेपान्तरवार्तिकम् )

॥ प्रोक्तादयश्च तद्धिताः ॥

प्रोक्तादयश्च तद्धिता नोपपद्यन्ते ॥ पाणिनिना प्रोक्तं पाणिनीयम् । आपिशलं काशकृत्स्नमिति । नहि पाणिनिना शब्दाः प्रोक्ताः ॥

किं तर्हि ? सूत्रम् ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुभयमुच्यते 'भवे' 'प्रोक्तादयश्च तद्धिताः' इति । न प्रोक्तादयश्च तद्धिताः, इत्येव भवेऽपि तद्धितश्चोदितः स्यात् ? ॥

( परिहारभाष्यम् )

पुरस्तादिदमाचार्येण दृष्टम्, भवे च तद्धित इति, तत्पठितम् । तत उत्तरकालमिदं दृष्टम्, "प्रोक्तादयश्च तद्धिताः" इति, तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ॥

( प्रथमाक्षेपकबाधकभाष्यम् )

अयं तावददोषः—यदुच्यते, 'शब्दे ल्युडर्थः' इति । नावश्यं करणाधिकरणयोरेव ल्युड्विधीयते ॥

किं तर्हि ? ॥

अन्येष्वपि कारकेषु "कृत्यल्युटो बहुलम्" इति । तद्यथा—प्रस्कन्दनं प्रपतनमिति ॥

( करणल्युट्समर्थनभाष्यम् )

अथवा शब्दैरपि शब्दा व्याक्रियन्ते तद्यथा—गौरित्युक्ते सर्वे सन्देहा निवर्तन्ते, नाश्वो न गर्दभ इति ॥

( अनुद्धृतदोषप्रदर्शकभाष्यम् )

**अयं तर्हि दोषः—"भवे" "प्रोक्तादयश्च तद्धिताः" इति ॥**

अथ व्याकरणमित्यस्य कः पदार्थ इति चेत्—अत्र केचित्—सूत्रं व्याकरणपदार्थः । नन्वेवं व्याकरणस्य सूत्रमिति षष्ठ्यर्थो नोपपद्यते । अभेदस्य षष्ठ्यर्थाभावात् । तथा नोपपद्यते च व्याकरणाच्छब्दान्प्रतिपद्यामह इति । नहि सूत्रत एव शब्दाः प्रतिपद्यन्ते, किन्तु—"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना" इत्येवंरूपाद्व्याख्यानादिति चेत्—न । राहोः शिर इतिवत् षष्ठ्यर्थोपपत्तेः । शब्दाप्रतिपत्तिरपि न । सर्वेषां तथाभावात्—व्याख्यानादिसत्त्वेऽपीति तत्त्वम् । अत एव "सूत्रमेव हि" इत्युक्तम् ।

( समाधानभाष्यम् )

**एवं तर्हि—**

( १९ सिद्धान्तवार्तिकम् १६ )

**॥ लक्ष्यलक्षणे व्याकरणम् ॥**

( भाष्यम् )

**लक्ष्यं लक्षणं चैतत्समुदितं व्याकरणं भवति ॥ किं पुनर्लक्ष्यम्, किं वा लक्षणम्? ॥ शब्दो लक्ष्यः, सूत्रं लक्षणम् ॥**

( समाधानबाधकभाष्यम् )

**एवमप्ययं दोषः—समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते । सूत्राणि चाप्यधीयान इष्यते—वैयाकरण इति ॥**

( समाधानसाधकभाष्यम् )

**नैष दोषः । समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते । तद्यथा पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं**

भुक्तं, घृतं भुक्तम्, शुक्लो नीलः कपिलः कृष्ण इति ॥ एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते ॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

अथवा पुनरस्तु सूत्रम् ॥

( प्रथमाक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—"सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः" इति ॥

( प्रथमाक्षेपनिरासभाष्यम् )

नैष दोषः, व्यपदेशिवद्भावेन भविष्यति ॥

( द्वितीयाक्षेपस्मारणभाष्यम् )

यदप्युच्यते—शब्दाप्रतिपत्तिः, इति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते ॥ किं तर्हि ? ॥ व्याख्यानतश्चेति ॥ परिहृतमेतत्—तदेव सूत्रं विगृहीतं व्याख्यानं भवतीति ॥

( परिहारबाधकस्मारणभाष्यम् )

ननु चोक्तं न केवलानि चर्चापदानि व्याख्यानम्—वृद्धिः, आत्, ऐजिति ॥

किं तर्हि ? ॥

"उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति" इति ॥

( परिहारसाधकभाष्यम् )

अविजानत एतदेवं भवति । सूत्रत एव हि शब्दान्प्रतिपद्यन्ते ॥ आतश्च सूत्रत एव । यो ह्युत्सूत्रं कथयेन्नादो गृह्येत ॥

( इति व्याकरणपदार्थनिरूपणभाष्यम् )

( अथ वर्णोपदेशप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

अथ किमर्थो वर्णानामुपदेशः ? ।

( १७ समाधानवार्तिकम् १ )

॥ वृत्तिसमवायार्थ उपदेशः ॥

( भाष्यम् )

वृत्तिसमवायार्थो वर्णानामुपदेशः ॥

किमिदं वृत्तिसमवायार्थ इति ? ।

वृत्तये समवायो वृत्तिसमवायः । वृत्त्यर्थो वा समवायो वृत्तिसमवायः । वृत्तिप्रयोजनो वा समवायो वृत्तिसमवायः ।

का पुनर्वृत्तिः ? ॥

शास्त्रप्रवृत्तिः ॥

अथ कः समवायः ? ॥

वर्णानामानुपूर्व्येण संनिवेशः ॥

अथ क उपदेशः ? ॥

उच्चारणम् ॥

कुत एतत् ? ॥

दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह—उपदिष्टा इमे वर्णा इति ॥

( १८ वर्णोपदेशप्रयोजनान्तरवार्तिकम् २ )

॥ अनुबन्धकरणार्थश्च ॥

( भाष्यम् )

अनुबन्धकरणार्थश्च वर्णानामुपदेशः—अनुबन्धानासङ्क्ष्यामीति । नह्यनुपदिश्य वर्णाननुबन्धाः शक्या आसङ्क्तुम् । स एष वर्णानामुपदेशो वृत्तिसमवायार्थश्चानुबन्धकरणार्थश्च । वृत्तिसमवायश्चानुबन्धकरणं च प्रत्याहारार्थम् । प्रत्याहारो वृत्त्यर्थः ॥

( १९ वर्णोपदेशप्रयोजनान्तरवार्तिकम् ३ )

॥ इष्टबुद्ध्यर्थश्च ॥

( भाष्यम् )

**इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः—'इष्टान्वर्णान् भोत्स्यामहे' इति । न ह्यनुपदिश्य वर्णानिष्टा वर्णाः शक्या विज्ञातुम् ॥**

अथ किमर्थो वर्णानामुपदेशः । वृत्तिसमवायार्थो वर्णानामुपदेशः । लोकप्रसिद्धमात्रिका पाठेनैव वर्णज्ञानसम्भवात्—अइउण्—इत्यादिरूपः पाणिनये महादेवेन कृत इति प्रश्ने वार्तिककार आह—वृत्तिसमवायेति । वृत्तिः लाघवेन शास्त्रप्रवृत्तिः, तदुपयोगी समवायो वर्णगतक्रमविशेषः, स बोध्यत्वेन, अर्थः प्रयोजनं यस्य स इत्यर्थः । द्वितीये वृत्तिश्चासौ समवाय इति कर्मधारयः । तृतीये षष्ठीतत्पुरुषः, वृत्तिप्रयोज्य इत्यर्थः । पारम्पर्येण शास्त्रप्रवृत्तौ—अस्याङ्गत्वम् । सति हि समवाये—इत्संज्ञा । ततः—आदिरन्त्येनेति प्रत्याहारः । ततः—इको यणचीत्यादिशास्त्रप्रवृत्तिरिति तात्पर्यम् ।

उपदेशः—उच्चारणम् । तथानुबन्धकरणार्थश्च । नह्यनुपदिश्य वर्णान्—अनुबन्धाः शक्या—आसङ्क्तुम् । वृत्तिसमवायश्चानुबन्धकरणश्च प्रत्याहारार्थमित्येव लाघवेन शास्त्रप्रवृत्त्यर्थमुपदेश इति भावः ।

इष्टेति—वार्णसाधुत्वबोधनार्थश्च वर्णानामुपदेशः कर्तव्य इत्यर्थः ।

( २० आक्षेपवार्तिकम् ४ )

॥ इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः ॥

( भाष्यम् )

**इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घ-**

प्लुतानामप्युपदेशः कर्तव्यः । एवं गुणा अपि हि वर्णा इष्यन्ते ॥

( २१ सिद्धान्तवार्तिकम् ५ )

॥ आकृत्युपदेशात्सिद्धम् ॥

( भाष्यम् )

अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिः । तथोवर्णाकृतिः ॥

( आक्षेपवार्तिकम् )

॥ आकृत्युपदेशात्सिद्धमिति चेत्–संवृतादीनां प्रतिषेधः ॥

( भाष्यम् )

आकृत्युपदेशात्सिद्धमिति चेत् संवृतादीनां प्रतिषेधो वक्तव्यः ॥

के पुनः संवृतादयः ? ॥

संवृतः, कलो, ध्मात, एणीकृतो, ऽम्बूकृतो, ऽर्धको, ग्रस्तो, निरस्तः, प्रगीतः, उपगीतः, क्ष्विण्णो, रोमश इति ॥ अपर आह—

"ग्रस्तं निरस्तमविलम्बितं निर्हतमम्बूकृतं ध्मातमथो विकम्पितम् ।

संदष्टमेणीकृतमर्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः" इति ॥

अतोऽन्ये व्यञ्जनदोषाः ॥

( सिद्धान्तिभाष्यम् )

नैष दोषः ॥

( समाधानवार्तिकम् )

॥ गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिः ॥

( भाष्यम् )

गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिर्भविष्यति ॥

( आक्षेपभाष्यम् )

अस्त्यन्यत् गर्गादिबिदादिपाठे प्रयोजनम् ॥

किम् ? ॥

समुदायानां साधुत्वं यथा स्यादिति ॥

( समाधानैकदेशिभाष्यम् )

एवं तर्ह्यष्टादशधा भिन्नां निवृत्तकलादिकामवर्णस्य प्रत्यापत्तिं वक्ष्यामि ॥

सा तर्हि वक्तव्या ॥

( २४ एकदेशिसमाधानवार्तिकम् ८ )

॥ लिङ्गार्था तु प्रत्यापत्तिः ॥

( भाष्यम् )

लिङ्गार्था सा तर्हि भवति ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ॥

( समाधानभाष्यम् )

यद्यप्येतदुच्यते । अथवैतर्हि अनेकमनुबन्धशतं नोच्चार्यमित्संज्ञा च न वक्तव्या लोपश्च न वक्तव्यः । यदनुबन्धैः क्रियते तत्कलादिभिः करिष्यते ॥

( आक्षेपभाष्यम् )

सिद्ध्यत्येवम् । अपाणिनीयन्तु भवति ॥

( सिद्धान्तिभाष्यम् )

यथान्यासमेवास्तु ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम् ॥ "आकृत्युपदेशात्सिद्धमिति चेत्संवृतादीनां प्रतिषेधः" इति ॥

(समाधानभाष्यम्)

परिहृतमेतत्,—गर्गादिबिदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यति—इति ॥

(समाधानबाधकभाष्यम्)

ननु चान्यद् गर्गादिबिदादिपाठे प्रयोजनमुक्तम् । किम्? समुदायानां साधुत्वं यथा स्यादिति ॥

(समाधानसाधकभाष्यम्)

एवं तर्ह्युभयमनेन क्रियते—पाठश्चैव विशेष्यते, कलादयश्च निवर्त्यन्ते ॥

कथं पुनरेकेन यत्नेनोभयं लभ्यम्? ॥

लभ्यमित्याह ॥

कथम्? ॥

द्विगता अपि हेतवो भवन्ति । तद्यथा—आम्राश्च सिक्ताः पितरश्च प्रीणीता इति । तथा वाक्यान्यपि द्विष्ठानि भवन्ति—श्वेतो धावति, अलम्बुसानां यातेति ॥

इष्टेति—वार्णसाधुत्वबोधनार्थश्च वर्णानामुपदेशः कर्तव्य इत्यर्थः । अत्राकृत्युपदेशादत्वादिनोदात्तादीनामेकरूपेण साधुत्वबोधनम् । नन्वाकृत्युपदेशे संवृतादीनां साधुत्वापत्तिः । ते च संवृतादयः, ग्रस्तं निरस्तेति । इतोऽन्ये व्यञ्जनदोषा अपि । अत एषां प्रतिषेधो वक्तव्यः । न च गर्गादिविदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यति । समुदायानां साधुत्वबोधनेन गर्गादिपाठस्य चारितार्थ्यात् । न चाष्टादशधाभिन्ननिवृत्तकलादिकानाम्—अ—अ—इति सूत्रानन्तरं प्रत्यापत्तिङ्कृत्वापि दोषवारणं भवतीति वाच्यम् । न च संवृतादीनाम्प्रतिषेधकल्पने प्रत्यापत्तिकल्पने वा विशेषाभाव इति वाच्यम् । प्रत्यापत्तिकरणे हि—अनेकमनुबन्धशतं नोच्चार्यम् । इत्संज्ञा च नं

कर्तव्या। लोपश्च न वक्तव्यः। यदनुबन्धैः क्रियते, तत्कलादिभिः करिष्यते। यथा चैधादयः कलदोषयुक्ताः पाठ्याः। तत्र कलादात्मनेपदम्। ध्मातात्कर्तृगामिनी क्रियाफले। टकितौ कलध्मातौ पठित्वा—आद्यन्तौ कलध्मातौ—इत्यादि पाठ्यम्। एते कलादयः प्रक्रियादशायामेव, प्रयोगे तु शुद्धा एव शास्त्रान्ते प्रत्यापत्तिकरणादिति वाच्यम्। सिद्धत्येवमपाणिनीयं तु भवति। वर्णसमाम्नायसमर्थनाय प्रवृत्तस्यैकदोषपरिहाराय सकलशास्त्रस्य व्याख्यानसापेक्षगुरुप्रकारेणान्यथाकरणे वृश्चिकभिय इत्यादिन्यायविषयापत्तिरिति चेत्। न। गर्गादिबिदादिपाठेनैव समुदायसाधुत्वं कलादिनिवृत्तिश्चोभयोरप्येकेनैव यत्नेन लाभसिद्धेः। यथा लोके—आम्राश्च सिक्ताः पितरश्च प्रीणीता इति। तथा च लोकेऽपि कः कीदृशो धावतीति प्रश्ने श्वेत इत्येकमेवोत्तरम्। श्वा इति छेदेन क इत्यस्योत्तरम्। इत इति छेदेन कीदृश इत्यस्योत्तरम्। यथावा केषां जनपदानां गन्ता, को वा समर्थ इति प्रश्ने—अलम्बुसानां यातेत्येकमेवोत्तरम्। अलम्बुसा देशविशेषाः। बुसानां पलालवर्णानां याता, प्राप्तिमान्—अलं समर्थ इत्यर्थः।

(भाष्यम्)

**अथवा—इदं तावदयं प्रष्टव्यः—क्वेमे संवृतादयः श्रूयेरन्निति?॥**

**आगमेषु।**

**आगमाः शुद्धाः पठ्यन्ते॥**

**विकारेषु तर्हि।**

**विकारा अपि शुद्धाः पठ्यन्ते॥**

**प्रत्ययेषु तर्हि।**

**प्रत्यया अपि शुद्धाः पठ्यन्ते॥**

धातुषु तर्हि ।

धातवोऽपि शुद्धाः पठ्यन्ते ॥

प्रातिपदिकेषु तर्हि ।

प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते ॥

यानि तर्ह्यग्रहणानि प्रातिपदिकानि ।

एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थं उपदेशः कर्तव्यः । शशः षष इति मा भूत् । मञ्चको मञ्जक इति मा भूत् ।

'आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः ।
उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः' ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये अर्थसंग्रहटीकासहिते प्रथमाध्यायस्य प्रथमपादे प्रथमाह्निकम् ॥

इति प्रथमं पस्पशाह्निकम् ॥

# PĀTAÑJALA VYĀKARAṆA MAHĀBHĀSYA

With a new Commentary

BY

PANDIT G. S. JOSHI

PART II

---

श्रीः

श्रीपतञ्जलिविरचितम्

# पातञ्जलव्याकरणमहाभाष्यम्

(द्वितीयो भागः)

स्वरचितार्थसंग्रहटीकासहितम्

पं. गोपालशास्त्रिणा प्रकाशितम्

मुंबई—निर्णयसागरमुद्रणालये मुद्रितम्



शके १८६६] *Price Rs 2-8-0* [सन १९४४

# Deccan College Post-Graduate and Research Institute

POONA, No 1.
*20th, January, 1942.*

I have carefully gone through a portion of the Sanskrit commentary called Arthasamgraha on the Mahabhasya of Patanjali by Gopalshastri Joshi and am happy to say that it is a great achievement. The well-known Commentaries of Kaiyata and Nagoji Bhatta are undoubtedly monuments of the deep erudition and subtle scholarship of their authors, but the lay reader, often bewildered by their pedantic discussions, may be pardoned if he sometimes thinks that the Mahabhasya is just a peg on which these savants hang their literary drapery! The present commentary, therefore, which seeks to clarify all the difficult and obscure points in the Mahabhasya in chaste and lucid Sanskrit, will, I hope, receive a warm reception from Sanskritists interested in the study of the Mahabhasya and will be particularly useful to Sanskrit students who offer Vyakarana as their Voluntary S'astra at the M. A. and have to study the first four Ahnikas of the Bhashya. What made a particularly favourable impression on me was the fact that the author has in a few cases, explained clearly points which have not been touched upon by Kaiyata on Nagoji Bhatta. The work, in my opinion, deserves the patronage of all lovers of Sanskrit learning

V. M. Apte,
M A. (Bom )
Ph. D. (Cantab)
Poona No 1

Sd/- **V. M Apte,**
Professor of Sanskrit Literature,

# प्रस्तावना ।



विदितमेवास्ति खलु विदुषा यत्पातञ्जलव्याकरणमहाभाष्यं भगवन्महर्षिपतञ्जलिविरचितम् व्याकरणशास्त्रे प्राधान्यतया प्रमाणत्वेन च वरीवर्तीति । यद्यप्यस्य भाषासौलभ्यं दृश्यते, तथापि दुरवगाह्यत्वमस्त्येव, कैय्यटनागेशादीनामपि मतभेदो दृश्यते । काशीस्थराजकीय-संस्कृतमहाविद्यालये महामहोपाध्याय–श्रीतात्याशास्त्रिणा सन्निधानेऽधीत्य परीक्षा दत्वा च लोकोपकारार्थमस्माभिरियं नूतना–अर्थसंग्रहनाम्नी सुलभा टीका लिखितास्ति । अस्याः प्रथमभागप्रसिद्ध्यनन्तरं सर्वत्र विद्वदादरतां सवीक्ष्य द्वितीयभागस्य मुद्रणं सम्पादितम् । सम्प्रति पत्राणां चानेकविधमहर्घताविशिष्टकष्टतरकाले केवल भगवत्कृपयैव ग्रन्थप्रकाशन सञ्जातमित्यत्र न सन्देह । पूर्ववदेव महाजनानामपि साहाय्यं लप्स्यतीत्याशास्ति ।

तथा च मुंबई–विश्वविद्यालयाद्द्विशतरूप्यकं साहाय्यं लब्धमतस्तस्योपकृतिं मन्ये । अग्रेऽपि तथैव साहाय्यं भवेदित्याशास्ते ।

जोशीत्युपाह्वगोपालशास्त्री.

## ॥ श्रीरस्तु ॥

**अयि भो महाशयाः !**

प्राप्ता यथाकालमिह भवद्भिर्विरचिता महाभाष्यटीका । पठिताचामूलाग्रं सा मया श्रद्धया । अन्वभवमानन्दममन्दमवलोक्य वैदुष्यमतुल भवताम् । कैय्यटनागेशप्रभृतीना व्याख्याः पण्डितानामेव सहाय्यं प्रदिशन्तीति ज्ञात्वा, यां सरणिमवलंब्य प्रवर्तन्ते चेत् सुकुमारधिय क्लेशं विना प्रभवेयुरविगन्तुं भाष्यार्थं तामङ्गीकृत्येमा टीका निर्मायास्मत्सदृशाननुगृहीतवन्तो भवन्तः पूजामर्हन्ति सर्वेषा व्याकरणतत्पराणाम् । महदिद पुण्यफलं मन्ये गैर्वाण्या यदद्यापि भवादृशा विद्यन्तेऽनवद्यसंस्कृतविद्याप्रचारणैकलोलुपा बुधाग्रिमा । अमृतमयी नोऽमरभारती मृता वदन्ति ये ज्ञानलवदुर्विदग्धा , ते यद्यवलोकन्ते मृदुलामनरालां च भाषाप्रयोगरीतिं भवता, लज्जाविनम्रवदना नूनं भवेयुः आयुर्दैर्घ्यारोग्यसौख्यवित्तकीर्त्याद्यखिलं प्रदाय सदयं वर्द्धयतु युष्मान् करुणानिधिर्जगत्पतिः ।

**इतिविज्ञापति सादरं विधेयः, गोपालनामा एम्. ए.**

साऊथ मलबार

ता २८।२।८२

॥ श्रीः ॥

# अथानुक्रमणिका प्रारभ्यते ।

श्रीः

# ॥ अथ द्वितीयाह्निकप्रारम्भः ॥



(शिवसूत्रम्)

## अइउण् ॥ १ ॥

(विवृतोपदेशप्रतिज्ञावार्तिकम् ॥ १ ॥)

### ॥ अकारस्य विवृतोपदेश आकारग्रहणार्थः ॥

(भाष्यम्)

अकारस्य विवृतोपदेशः कर्तव्यः । किं प्रयोजनम्? । आकारग्रहणार्थः । अकारः सवर्णग्रहणेनाऽऽकारमपि यथा गृह्णीयात् ॥ किं च कारणं न गृह्णीयात्? । विवारभेदात् ॥

(आक्षेपभाष्यम्)

किमुच्यते विवारभेदादिति, न पुनः कालभेदादपि । यथैव ह्ययं विवारभिन्नः, एवं कालभिन्नोऽपि ॥ १ ॥

(समाधानभाष्यम्)

सत्यमेव तत् । वक्ष्यति "तुल्यास्यप्रयत्नं सवर्णम्" इत्यास्यग्रहणस्य प्रयोजनम्—आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति । बाह्यश्च पुनरास्यात्कालः । तेन स्यादेव कालभिन्नस्य ग्रहणम्, न पुनर्विवारभिन्नस्य ॥

(आक्षेपभाष्यम्)

किं पुनरिदं विवृतोपदिश्यमानस्य प्रयोजनमन्वा-

ख्यायते, आहोस्वित् संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यते ? ॥

(समाधानभाष्यम्)

विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते ॥ कथं ज्ञायते ? । यदयम्—"अ अ" इत्यस्य विवृतस्य संवृतताप्रत्यापत्तिं शास्ति ॥

## अथार्थसंग्रहा टीका प्रारभ्यते

अइउण्—अकारस्येति—अयं भावः । "अ अ" इति ज्ञापकादत्र सूत्रेऽकारो विवृतोपदिष्टः । तस्य प्रयोजनम्—अकारग्रहणेन—आकारग्रहणं यथा स्यात् । संवृतोपदेशे हि विवृतस्य—अकारस्य प्रयत्नभेदेन—असावर्ण्यादनेन—अकारेण ग्रहणं न स्यात् ॥

(समाधानबाधकभाष्यम्)

नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् ? । अतिखट्वः अतिमाल इत्यत्रान्तर्यतो विवृतस्य विवृतः प्राप्नोति, संवृतः स्यादित्येवमर्थां प्रत्यापत्तिः ।

(समाधानसाधकभाष्यम्)

नैतदस्ति । नैव लोके न च वेदेऽकारो विवृतोऽस्ति । कस्तर्हि ? । संवृतः, योऽस्ति स भविष्यति । तदेतत्प्रत्यापत्तिवचनं ज्ञापकमेव भविष्यति विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत—इति ॥

(आक्षेपभाष्यम्)

कः पुनरत्र विशेषः ? विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायेत, संवृतोपदिश्यमानस्य वा विवृतोपदेशश्चोद्येतेति ? ॥

(समाधानभाष्यम्)

**न खलु कश्चिद्विशेषः। आहोपुरुषिकामात्रं तु भवानाह संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यत इति। वयं तु ब्रूमो-विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत इति ॥**

न चातिखट्व इत्यत्र "उदीचामातस्थानेति" ज्ञापकादाकारस्य-ह्रस्वाप्राप्तौ विवृत एव स्यात् संवृतविधानार्थम्-अइउणिति सूत्रं चरितार्थमिति वाच्यम्। प्रयुक्तानामेवानुशासनात्प्रयोगे च विवृताकारस्यासंभवात्संवृत एव भविष्यतीति ज्ञापकस्य सुस्थत्वात्। आहोपुरुषिकेति केवलाहंकारवचनं नोपयुक्तमिति भावः।

(धात्वादिषु विवृतत्वप्रतिज्ञावार्तिकम्)

**॥ तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः ॥**

**तस्यैतस्याक्षरसमाम्नायिकस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः कर्तव्यः । क्वान्यत्र? । धातुप्रातिपदिकप्रत्ययनिपातस्थस्य। किं प्रयोजनम्? । सवर्णग्रहणार्थः। आक्षरसमाम्नायिकेनास्य ग्रहणं यथा स्यात् । किं च कारणं न स्यात्?। विवारभेदादेव ॥**

(धात्वादिषु विवृतत्वप्रतिज्ञाबाधकभाष्यम्)

**आचार्यप्रवृत्तिर्ज्ञापयति-भवत्याक्षरसमाम्नायिकेन धात्वादिस्थस्य ग्रहणमिति । यदयम्-"अकः सवर्णे दीर्घः" इति प्रत्याहारेऽको ग्रहणं करोति। कथं कृत्वा ज्ञापकम्? । न हि द्वयोराक्षरसमाम्नायिकयोर्युगपत्समवस्थानमस्ति ॥**

(धात्वादिषु विवृतत्वप्रतिज्ञासाधकभाष्यम्)

**नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयो-**

जनम् । किम्? । यस्याक्षरसमाम्नायिकेन ग्रहणमस्ति, तदर्थमेतत्स्यात्—खट्वाढकं मालाढकमिति । सति प्रयोजने न ज्ञापकं भवति । तस्माद्विवृतोपदेशः कर्तव्यः ॥

(आक्षेपभाष्यम्)

क एष यत्नश्चोद्यते, विवृतोपदेशो नाम । विवृतो वोपदिश्येत, संवृतो वा । को न्वत्र विशेषः? ॥

(समाधानभाष्यम्)

स एष सर्व एवमर्थो यत्नः क्रियते । यान्येतानि प्रातिपदिकान्यग्रहणानि तेषामेतेनाभ्युपायेनोपदेशश्चोद्यते, तद्गुरु भवति । तस्माद्वक्तव्यम्—धात्वादिस्थश्च विवृत इति ॥

धातुप्रातिपदिकप्रत्ययनिपातस्थानामपि विवृतोपदेशः प्रतिज्ञेयः । आक्षरसमाम्नायिकेनैतदकारस्य ग्रहणं यथा स्यादित्येवमर्थः । न चाकः सवर्ण इत्येतत्सामर्थ्यादाक्षरसमाम्नायिकेन धात्वादिस्थानां ग्रहणं भविष्यतीति ज्ञाप्यत इति वाच्यम् । ककारादिचिह्नेन—अक् घटकाकारः, आक्षरसमाम्नायिक एव । ततश्चाणुदित्सूत्रेण दीर्घादीनां ग्रहणात्खट्वाढकमित्यादौ तस्य चारितार्थ्यात् । यद्यपि धात्वादिष्वकारस्य संवृतस्य विवृतस्य वोपदेशे विशेषाभावस्तथाप्यग्रहणप्रातिपदिकेषु प्रतिपदपाठस्याशक्यत्वात्तस्य विवृतोपदेश इति भाष्येण सर्वस्य—अकारस्य विवृतोपदेशः कार्यतया चोद्यते । धात्वादिश्च विवृत इत्यादिना । अन्यथा दोषरूपविवृतोच्चारितप्रयत्नस्य गौरवं स्यात् ।

(प्रयोजनान्तरवार्तिकम्)

॥ दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थः ॥

(भाष्यम्)

दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थो विवृतोपदेशः कर्तव्यः । दीर्घप्लुतौ संवृतौ मा भूतामिति । वृक्षाभ्याम्,

देवदत्ता ३ इति । नैवं लोके न च वेदे दीर्घप्लुतौ संवृतौ स्तः । कौ तर्हि? । विवृतौ । यौ स्तस्तौ भविष्यतः ॥

स्थानी प्रकल्पयेदेतावनुस्वारो यथा यणम् ।
संवृतस्थानि संवृतौ दीर्घप्लुतौ प्रकल्पयेत् ॥

अनुस्वारो यथा यणम् । तद्यथा—सँय्यन्ता सँव्वत्सरः यँल्लोकं तँल्लोकमिति—अनुस्वारः स्थानीयणमनुनासिकं प्रकल्पयति ॥

( निराकरणभाष्यम् )

विषम उपन्यासः युक्तं यत्सतस्तत्र प्रकृतिर्भवति । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च । दीर्घप्लुतौ पुनर्नैव लोके च वेदे संवृतौ स्तः । कौ तर्हि? । विवृतौ, यौ स्तस्तौ भविष्यतः ॥

( आक्षेपभाष्यम् )

एवमपि कुत एतत्—तुल्यस्थानौ प्रयत्नभिन्नौ भविष्यतः, न पुनस्तुल्यप्रयत्नौ स्थानभिन्नौ स्याताम्—ईकार ऊकारो वेति? ॥

( समाधानभाष्यम् )

वक्ष्यति "स्थानेऽन्तरतमः" इत्यत्र स्थान इत्यनुवर्तमाने पुनः स्थाने ग्रहणस्य प्रयोजनम् 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयो भवति' इति ॥

दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थमिति प्रयोजनं तु मन्दम् । वेदलोकयोः संवृतदीर्घप्लुतयोरसत्वादेव तन्निवृत्तिसिद्धेः । संवृतस्थानी संवृतदीर्घप्लुतौ त्वनुस्वारो यणमनुनासिकमिव न प्रकल्पयेत् । यणोऽनुनासिकस्य सत्वेनानुस्वारेण तत्कल्पनेऽपि दीर्घप्लुतयोः संवृतयोरसत्वात्तत्कल्पनासंभवात् । न च यद्वृतः संवृता—अन्यत्राभेवसान्न

इति कैश्चिदीकारोकारयोः संवृतत्वाभ्युपगमात्संवृताकारस्य संवृतावीकारोकारौ प्राप्नुत इति वाच्यम् । स्थानत आन्तर्यस्य बलवत्त्वात्तयोरप्राप्तेः ।

( वर्णसमाम्नाये जातिपक्षाधिकरणम् )

( पूर्वपक्ष्याक्षेपवार्तिकम् )

॥ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् ॥

( भाष्यम् )

तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति- "अस्य च्वौ" "यस्येति च" किं कारणम् ? । अनण्त्वात् । न ह्येतेऽणः येऽनुवृत्तौ । के तर्हि ? । येऽक्षरसमाम्नाये उपदिश्यन्ते ॥

( एकदेशिसमाधानवार्तिकम् )

॥ एकत्वादकारस्य सिद्धम् ॥

( भाष्यम् )

एकोऽयमकारो यश्चाक्षरसमाम्नाये यश्चानुवृत्तौ यश्च धात्वादिस्थः ॥

( आक्षेपवार्तिकम् )

॥ अनुबन्धसंकरस्तु ॥

( भाष्यम् )

अनुबन्धसंकरस्तु प्राप्नोति । "कर्मण्यण्" "आतोऽनुपसर्गे कः" इति केऽपि णित्कृतं प्राप्नोति ॥

( द्वितीयाक्षेपवार्तिकम् )

॥ एकाजनेकाज्ग्रहणेषु चानुपपत्तिः ॥

( भाष्यम् )

एकाजनेकाज्ग्रहणेषु चानुपपत्तिर्भवति । तत्र को दोषः ? । किरिणा गिरिणेत्येकाज्लक्षणमन्तोदात्तत्वं

प्राप्नोति। इह च घटेन तरति घटिक इति द्व्यज्लक्षणः ठन् न प्राप्नोति॥

(तृतीयाक्षेपवार्तिकम्)

॥ द्रव्यवच्चोपचाराः॥

(भाष्यम्)

द्रव्यवच्चोपचाराः प्राप्नुवन्ति। तद्यथा–द्रव्येषु नैकेन घटेनानेको युगपत्कार्यं करोति। एवमिममकारं नानेको युगपदुच्चारयेत्।

(प्रथमाक्षेपनिराकरणवार्तिकम्)

॥ विषयेण तु नानालिङ्गकरणात्सिद्धम्॥

(भाष्यम्)

यदयं विषये विषये नानालिङ्गमकारं करोति–"कर्मण्यण्" आतोऽनुपसर्गे क" इति। तेन ज्ञायते–नानुबन्धसंकरोऽस्तीति। यदि हि स्यात् नानालिङ्गकरणमनर्थकं स्यात्, एकमेवायं सर्वगुणमुच्चारयेत्॥

(ज्ञापकनिराकरणभाष्यम्)

नैतदस्ति ज्ञापकम्। इत्संज्ञाप्रक्लृप्त्यर्थमेतत्स्यात्। न ह्ययमनुबन्धैः शल्यकवच्छक्य उपचेतुम्। इत्संज्ञायां हि दोषः स्यात्। आद्यस्य हि द्वयोरित्संज्ञा स्यात्। कयोः?। आद्यन्तयोः॥

(आक्षेपनिराकरणवार्तिकव्याख्यान्तरभाष्यम्)

एवं तर्हि–विषयेण तु पुनर्लिङ्गकरणात्सिद्धम्। यदयं विषये विषये पुनर्लिङ्गमकारं करोति–"प्राग्दीव्यतोऽण्" "शिवादिभ्योऽण्" इति तेन ज्ञायते–नानुबन्धसंकरोऽस्तीति। यदि हि स्यात् पुनर्लिङ्गकरणमनर्थकं स्यात्॥

(प्रथमव्याख्याभ्युपगमभाष्यम्)

अथवा पुनरस्तु—विषयेण तु नानालिङ्गकरणात्सिद्धम् । तद्यथा लोके कश्चिदेवं देवदत्तमाह—इह मुण्डो भव, इह जटिलो भव, इह शिखी भवेति यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपस्थास्यते ॥

(द्वितीयाक्षेपानुवादभाष्यम्)

यदप्युच्यते—एकाजनेकाज्ग्रहणेषु चानुपपत्तिः, इति ।

(द्वितीयाक्षेपनिराकरणवार्तिकम्)

॥ एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात् ॥

(भाष्यम्)

एकाजनेकाज्ग्रहणेषु चावृत्तेः संख्यानादनेकाच्त्वं भविष्यति । तद्यथा "सप्तदशसामिधेन्यो भवन्ति" इति "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इत्यावृत्तितः सप्तदशत्वं भवति । एवमिहाप्यावृत्तितोऽनेकाच्त्वं भविष्यति ॥

(आक्षेपभाष्यम्)

भवेदावृत्तितः कार्यं परिहृतम् । इह तु खलु—किरिणा गिरिणेत्येकाज्लक्षणमन्तोदात्तत्वं प्राप्नोत्येव ॥

(समाधानभाष्यम्)

एतदपि सिद्धम् । कथम् ? । लोकतः । तद्यथा—ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्वा तया सर्वे ते सहस्रदक्षिणाः सम्पन्नाः । एवमिहाप्यनेकाच्त्वं भविष्यति ॥

(तृतीयाक्षेपनिराकरणभाष्यम्)

यदप्युच्यते—द्रव्यवच्चोपचाराः प्राप्नुवन्तीति । भवेत् यदसंभवि कार्यं तन्नानेको युगपत्कुर्यात् । यत्तु खलु

संभवि कार्यमनेकोऽपि तद्युगपत्करोति । तद्यथा-घटस्य दर्शनं स्पर्शनं वा । संभवि चेदं कार्यमकारस्योच्चारणं नाम । अनेकोऽपि तद्युगपत्करिष्यति ॥

( पूर्वपक्षिसंमतनानात्वसाधकवार्तिकम् )

॥ आन्यभाव्यं तु कालशब्दव्यवायात् ॥

( भाष्यम् )

आन्यभाव्यं त्वकारस्य । कुतः ? । कालशब्दव्यवायात् । कालव्यवायाच्छब्दव्यवायाच्च । कालव्यवायात्-दण्ड अग्रम् । शब्दव्यवायात्-दण्डः । नचैकस्यात्मनो व्यवायेन भवितव्यम् । भवति चेद्भवत्यान्यभाव्यमकारस्य ॥

( नानात्वहेतुवार्तिकम् )

॥ युगपच्च देशपृथक्त्वदर्शनात् ॥

( भाष्यम् )

युगपच्च देशपृथक्त्वदर्शनान्मन्यामहे-आन्यभाव्यमकारस्येति । यदयं युगपद्देशपृथक्त्वेषूपलभ्यते-अश्वः, अर्कः, अर्थ इति । न ह्येको देवदत्तो युगपत्स्रुघ्ने च भवति मथुरायां च ॥

( एकत्ववादिभाष्यम् )

यदि पुनरिमे वर्णाः-

( एकत्वसाधकवार्तिकम् )

॥ शकुनिवत्स्युः ॥

( भाष्यम् )

तद्यथा-शकुनय आशुगामित्वात्पुरस्तादुत्पतिताः पश्चाद्दृश्यन्ते । एवमयमकारो द इत्यत्र दृष्टो-ण्ड इत्यत्र दृश्यते ॥

(नानात्ववादिभाष्यम्)

नैवं शक्यम् । अनित्यत्वमेवं स्यात् । नित्याश्च शब्दाः । नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । यदि चायं द इत्यत्र दृष्टोऽण्ड इत्यत्र दृश्येत, नायं कूटस्थः स्यात् ॥

(एकत्ववादिभाष्यम्)

यदि पुनरिमे वर्णाः–

(एकत्ववादिमतवार्तिकम्)

॥ आदित्यवत्स्युः ॥

(भाष्यम्)

तद्यथा एक आदित्योऽनेकाधिकरणस्थो युगपद्देशपृथक्त्वेषूपलभ्यते ॥

(नानात्ववादिभाष्यम्)

विषम उपन्यासः–नैको द्रष्टाः, आदित्यमनेकाधिकरणस्थं युगपद्देशपृथक्त्वेषूपलभते । अकारं पुनरुपलभते ॥

(एकत्ववादिभाष्यम्)

अकारमपि नोपलभते । किं कारणम्? । श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः । एकं च पुनराकाशम् ॥

(नानात्ववादिभाष्यम्)

आकाशदेशा अपि बहवः । यावता बहवः तस्मादान्यभाव्यमकारस्य ॥

(सिद्धान्तसमाधानवार्तिकम्)

॥ आकृतिग्रहणात्सिद्धम् ॥

(भाष्यम्)

अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिः, तथोवर्णाकृतिः ॥

(सिद्धान्तसाधकवार्तिकम्)

॥ तद्वच्च तपरकरणम् ॥

(भाष्यम्)

एवं च कृत्वा तपराः क्रियन्ते—आकृतिग्रहणेनातिप्रसक्तमिति ॥

(सिद्धान्तदूषकभाष्यम्)

ननु च सवर्णग्रहणेनातिप्रसक्तमिति कृत्वा तपराः क्रियेरन् ॥

(सिद्धान्तभूषकभाष्यम्)

प्रत्याख्यायते तत् । सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वाच्च इति ॥

(सिद्धान्तवार्तिकम्)

॥ हल्ग्रहणेषु च ॥

(भाष्यम्)

किम्? । आकृतिग्रहणात्सिद्धम्—इत्येव । "झलो झलि" अवात्ताम् अवात्तम् अवात्त । यत्रैतन्नास्ति—अण् सवर्णान्गृह्णाति—इति ॥

(सिद्धान्तसमाधानवार्तिकम्)

॥ रूपसामान्याद्वा ॥

(भाष्यम्)

रूपसामान्याद्वा सिद्धमेतत् । तद्यथा 'तानेव शाटकानाच्छादयामः, ये मथुरायाम्' 'तानेव शालीन् भुञ्ज्महे, ये मगधेषु' 'तदेवेदं भवतः कार्षापणं, यन्मथुरायां गृहीतम्' अन्यस्मिंश्चान्यस्मिन् रूपसामान्यात् 'तदेवेदम्' इति भवति । एवमिहापि रूपसामान्यात्सिद्धम् ॥ १ ॥

ननु व्यक्तिपक्षे–अस्य च्वावित्यादौ–अइउण्–इत्यकारभिन्नत्वाद-ग्रण्त्वाभावेन दीर्घादीनां ग्रहणं न स्यात् । न चैकत्वादकारस्य सेद्धम् । उच्चारणभेदेन भेदाभावात्सर्वेषामकाराणामेकत्वेन–'अस्य च्वौ" "यस्येति च" इत्यत्रापि–अइउण्सूत्रघटक एवाकार ;ति–अण्त्वात्सवर्णग्रहणं भविष्यतीति वाच्यम् । न चैवं काणोरप्य-रुत्वात् कित्वणित्वप्रयुक्तकार्यापत्तिः । तथा घटिक इत्यत्र घ्यज्लक्षणष्ठन्न स्यात् । तथा अकारस्यैकत्वेनानेको युगपत्तमुच्चारयेदि-त्यापत्तय इति वाच्यम् । काणोः ककारणकाररूपनानालिङ्गकरणा-त्प्राग्दीव्यतोऽण् शिवादिभ्योऽण्–इत्यादौ पुनर्लिङ्गकरणादनुबन्ध-संकररूप आद्यदोषाभावः । सप्तदशसामिधेन्य इतिवत्तिकरिणेत्यादा-विकारस्यावृत्तेरनेकाच्त्वं भविष्यतीति द्वितीयदोषवारणम् । न च तस्यानेकाच्त्वेऽप्येकाज्लक्षणमन्तोदात्तत्वं स्यादेवेति वाच्यम् । एतस्यापि लोकतः सिद्धेः । तद्यथा ऋषिसहस्रमेकां कपिलामेकैकशः सहस्र-कृत्वो दत्वा तया ते सर्वे सहस्रदक्षिणाः सम्पन्ना एवमिहाप्यनेकाच्त्वं भविष्यति । गौण्यप्युत्तरा संख्या, पूर्वां संख्यां बाधत इत्यनेनाने-काच्त्वस्य बाधात् । यदसम्भवि कार्यं तन्नानेको युगपत्कुर्यात् । उच्चारणरूपकार्यं तु–अनेको युगपत्करिष्यतीति वाच्यम् । अनु-मानेन–अकारे एकत्वाभावसिद्धेः । आन्यभाव्यं तु कालशब्द-व्यवायात् । दण्डाग्रमित्यत्र कालव्यवायाद्दण्ड इत्यत्र शब्दव्यवाया-देकत्वाभावस्यानुमानात् । तथा युगपच्च देशपृथक्त्वदर्शनादकारस्या-न्यत्वं सेत्स्यति । न ह्येको देवदत्तो युगपत्स्रुघ्ने मथुरायां च भवति । अयं पुनरकारः, अर्कः अश्व इत्यादौ युगपत्पृथग्देशेषु वर्तते । शकुनिदृष्टान्तेन युगपदेकत्र दर्शनन्नोपयुज्यते । शब्दानां नित्यत्वेन तदसम्भवात् । आदित्यदृष्टान्तोऽपि युगपद्देशपृथक्त्वेषूपलंभे, न संभवति । नैको द्रष्टा–आदित्यमनेकाधिकरणस्थं युगपद्देशपृथक्त्वेषू-पलभते । अकारं पुनरनेकाधिकरणस्थमेको द्रष्टा उपलभ्यत इति वैषम्यम् । न चाकारस्यैकत्वविशिष्टाकाशाधिकरणत्वेनानेकाधिक-

रणत्वाभावादादित्यदृष्टान्त इति वाच्यम् । आकाशदेशा अपि बहवः । तथा च अकारस्यान्यत्वसिद्धिरिति चेत् । न । आकृतिग्रहणात्सिद्धिरिति भाष्येण सर्वेषामकाराणाम्–अइउण्–इत्यकारोऽनुकरणमिति–अस्य च्वाविति–अकारोऽप्यण् एवेति दोषाभावात् । आकृतिपक्षस्याचार्याभिमतत्वादेव ऋत उत्–इत्यत्र तपरकरणमाकृतिग्रहणेन प्राप्ताधिकनिवृत्त्यर्थं चरितार्थम् । जातिपक्षस्वीकारादेव च सर्वतकारग्रहणाज्झलो झलीति सलोपसिद्धिः । अस्मिन्पक्षे अणुदित्सूत्रेऽण्ग्रहणं व्यर्थमेव । जातिपक्षाश्रयणेऽपि–अस्य च्वावित्यकारे, अइउण्सूत्रस्थ एवायमिति प्रत्यभिज्ञानात्सर्वाकारग्रहणसिद्धिरिति तदुक्तं रूपसामान्याद्वेति ॥

( शिवसूत्रम् )

॥ ऋलृक् ॥

( आक्षेपभाष्यम् )

**अथ लृकारोपदेशः किमर्थः ? ॥**

( आक्षेपबाधकभाष्यम् )

**किं विशेषेण लृकारोपदेशश्चोद्यते, न पुनरन्येषामपि वर्णानामुपदेशश्चोद्यते, यदि किंचिदन्येषामपि वर्णानामुपदेशे प्रयोजनमस्ति लृकारोपदेशस्यापि तद् भवितुमर्हति । को वा विशेषः ? ॥**

( आक्षेपसाधकभाष्यम् )

**अयमस्ति विशेषः । अस्य हि लृकारस्याल्पीयांश्चैव प्रयोगविषयः । यश्चापि प्रयोगविषयः सोऽपि कॢपिस्थस्यैव । कृपेश्च लत्वमसिद्धम् । तस्यासिद्धत्वादृकारस्यैवाच्कार्याणि भविष्यन्ति नार्थ लृकारोपदेशेन ॥**

( भाष्यम् )

**अत उत्तरं पठति–**

(समाधानवार्तिकम्)

॥ ऌकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः ॥

(भाष्यम्)

ऌकारोपदेशः क्रियते, यदृच्छाशब्दार्थोऽशक्तिजानुकरणार्थः प्लुत्याद्यर्थश्च ॥

ऋऌगिति—अथ ऌकारघटितप्रयोगाश्च क्ऌपधातोरेवेति तद्घटकऌकारस्यासिद्धत्वादृकारबुद्ध्यैवाच्कार्याणि भविष्यन्तीति ऌकारोपदेशोऽत्र व्यर्थ इति चेद्—उत्तरमाह—ऌकारोपदेश इति ।

(भाष्यम्)

यदृच्छाशब्दार्थस्तावत्—यदृच्छया कश्चित् ऌतको नाम। तस्मिन्नच् कार्याणि यथा स्युः—दध्यऌतकाय देहि मध्वऌतकाय देहि, उदङ्ऌतकोऽगमत्, प्रत्यङ्ऌतकोऽगमत् । चतुष्टयी शब्दानां प्रवृत्तिः, जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्चतुर्थाः ॥

अशक्तिजानुकरणार्थः—अशक्त्या कयाचिद्ब्राह्मण्या ऋतक इति प्रयोक्तव्ये ऌतक इति प्रयुक्तम् । तस्यानुकरणं ब्राह्मण्यऌतक इत्याह कुमार्यऌतक इत्याहेति ॥

प्लुत्याद्यर्थश्च [ऌकारोपदेशः कर्तव्यः] ॥

के पुनः प्लुत्यादयः ? ॥

प्लुतिद्विर्वचनस्वरिताः । क्ऌ ३ प्तशिखः । क्ॢप्तः । प्रक्ॢप्तः । प्लुत्यादिषु कार्येषु कृपेर्लत्वं सिद्धम् । तस्य सिद्धत्वादच्कार्याणि न सिद्ध्यन्ति । तस्मात् ऌकारोपदेशः क्रियते ॥

(अथ प्रयोजननिराकरणभाष्यम्)

नैतानि सन्ति प्रयोजनानि ।

(प्रयोजनप्रत्याख्यानवार्तिकम्)

॥ न्याय्यभावात्कल्पनं संज्ञादिषु ॥

(भाष्यम्)

**न्याय्यस्य ऋतकशब्दस्य भावात् कल्पनं संज्ञादिषु साधु मन्यन्ते-ऋतक एवासौ, न ऌतक इति ॥**

(व्याख्यान्तरभाष्यम्)

**अपर आह–न्याय्य ऋतकशब्दः शास्त्रान्वितोऽस्ति । स कल्पयितव्यः साधुः, संज्ञादिषु–ऋतक एवासौ न ऌतकः ॥**

(प्रत्याख्यानबाधकभाष्यम्)

**अयं तर्हि यदृच्छाशब्दोऽपरिहार्यः–ऌफिडः ऌफिड्डश्चेति ॥**

(प्रत्याख्यानसाधकभाष्यम्)

**एषोऽपि ऋफिडः ऋफिड्डश्च । कथम् ? । अर्तिप्रवृत्तिश्चैव हि लोके लक्ष्यते । फिडफिड्डावौणादिकौ प्रत्ययौ । त्रयी च शब्दानां प्रवृत्तिः–जातिशब्दा गुणशब्दा क्रियाशब्दा इति । न सन्ति यदृच्छाशब्दाः ॥**

चत्वारः शब्दाः । जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्चेति । तत्र ऌतके यदृच्छाशब्दे दध्यऌतकाय देहीत्यादौ यणः सिद्धये ऌकारोपदेशः । एवम्–ऋतक इति प्रयोक्तव्ये, अशक्त्या ऌतक इति प्रयुक्तं तस्यानुकरणे ब्राह्मण्यऌतकेत्याहेत्यादौ यण्सिद्धिर्ऌकारोपदेशफलम् । एवं क्लृतिद्विवचनस्वरितानां दृष्टचा क्लृप्तशिखः प्रक्लृप्तेत्यत्र च कृपेर्लत्वं सिद्धम् । अतः ऋकारबुद्ध्यैवाच्कार्याप्रवृत्तेर्ऌकोपदेशस्यावश्यकता । केचित्तु एतदुक्तं न मन्यन्ते । ऋतक एव न्याय्यत्वात् यदृच्छाशब्दः प्रयोक्तव्यः, न तु ऌतकः । यद्वा ऋतकशब्दस्यैवापभ्रंशोऽशक्तिमत्त्वाद् ऌतक इत्युच्यते । ऌफिड इति यदृच्छाशब्दोऽपि–ऋफिड एव । ऋधातोः फिड औणादिकः प्रत्यय इति यदृच्छाशब्दा नैव सन्ति स्वतन्त्रा इति ।

(प्रयोजनवादिभाष्यम्)

अन्यथा कृत्वा प्रयोजनमुक्तम्, अन्यथा कृत्वा परिहारः। सन्तीति यदृच्छाशब्दा इति कृत्वा प्रयोजनमुक्तम्, न सन्तीति परिहारः, समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तको भवति । तद्यथा देवदत्तशब्दो देवदिण्णशब्दं निवर्तयति, न गाव्यादीन् ॥

(प्रत्याख्यानभाष्यम्)

नैष दोषः। पक्षान्तरैरपि परिहारा भवन्ति ॥

पक्षेति–यथा द्रव्यजातिपक्षयोः । सरूपाणामिति सूत्रस्यारम्भो द्रव्यपक्षे । जातिपक्षाश्रयणेन प्रत्याख्यानम् ।

(इति यदृच्छाशब्दनिराकरणम्)

(द्वितीयप्रयोजनप्रत्याख्यानवार्तिकम्)

॥ अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु यथा लौकिकवैदिकेषु ॥

(भाष्यम्)

अनुकरणं हि शिष्टस्य वा साधु भवति, अशिष्टाप्रतिषिद्धस्य वा नैव तद्दोषाय भवति, नाभ्युदयाय ॥ यथा लौकिकवैदिकेषु । यथा लौकिकेषु वैदिकेषु च कृतान्तेषु । लोके तावद्–य एवमसौ ददाति य एवमसौ यजते, स एवमसावधीते, इति । तस्यानुकुर्वन् दद्याच्च यजेत चाधीयीत च सोऽभ्युदयेन युज्यते ॥ वेदेऽपि "य एवं विश्वसृजः सत्राण्यध्यासते" इति, तेषामनुकुर्वन् तद्वत्सत्राण्यध्यासीत । सोऽभ्युदयेन युज्यते ॥ अशिष्टाप्रतिषिद्धं यथा–य एवमसौ हिक्कति, य एवमसौ हसति, य एवमसौ कण्डूयतीति । तस्यानुकुर्वन् हिक्केच्च हसेच्च कण्डूयेच्च नैव तद्दोषाय स्यान्नाभ्युदयाय ॥ यस्तु खल्वेव-

मसौ ब्राह्मणं हन्ति एवमसौ सुरां पिबतीति तस्यानुकुर्वन् ब्राह्मणं हन्यात्सुरां वा पिबेत्, सोऽपि मन्ये पतितः स्यात् ॥

(प्रयोजनसमर्थनभाष्यम्)

विषम उपन्यासः। यश्चैवं हन्ति यश्चानु हन्ति, उभौ तौ हतः। यश्चापि पिबति, यश्चानु पिबति, उभौ तौ पिबतः॥ यस्तु खल्वेवमसौ ब्राह्मणं हन्ति एवमसौ सुरां वा पिबतीति तस्यानुकुर्वन्स्नातानुलिप्तो माल्यगुणकण्ठः कदलीस्तम्भं छिन्द्यात्पयो वा पिबेत्, न स मन्ये पतितः स्यात् ॥

(प्रयोजनप्रत्याख्यानभाष्यम्)

एवमिहापि य एवमसावपशब्दं प्रयुङ्क्ते इति तस्यानुकुर्वन्नपशब्दं प्रयुञ्जीत, सोऽप्यपशब्दभाक् स्यात् ॥

(समाधानभाष्यम्)

अयं त्वन्योपशब्दपदार्थकः शब्दोऽपशब्दो भवति। अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यतेऽपशब्दपदार्थकः शब्दोऽपशब्दो भवतीति, अपशब्द इत्येव तस्यापशब्दः स्यात्। न चैषोऽपशब्दः॥

(प्रयोजनभाष्यम्)

अयं खल्वपि भूयोऽनुकरणशब्दोऽपरिहार्यः, यदर्थ उपदेशः कर्तव्यः। साध्वॢकारमधीते मध्वॢकारमधीत इति ॥

(खण्डनभाष्यम्)

कस्यस्य पुनरेतदनुकरणम्? ॥

कॢपिस्थस्य ॥

यदि क्लृपिस्थस्य, क्लृपेश्च लत्वमसिद्धम् । तस्यासिद्धत्वादृकार एवाच्कार्याणि भविष्यन्ति ॥

(प्रयोजनभाष्यम्)

भवेत्तदर्थेन नार्थः स्यात् । अयं त्वन्यः क्लृपिस्थपदार्थकः शब्दः, यदर्थ उपदेशः कर्तव्यः ॥

(खण्डनभाष्यम्)

न कर्तव्यः । इदमवश्यं कर्तव्यम्—"प्रकृतिवदनुकरणं भवति" इति ॥ किं प्रयोजनम् ? ॥ 'द्विः पचन्त्वित्याह' "तिङ्ङतिङः" इति निघातो यथा स्यात् । 'अग्नी इत्याह' "ईदूदेद्द्विवचनं प्रगृह्यम्" इति प्रगृह्यसंज्ञा यथा स्यात् ॥

(खण्डनोपसंहारभाष्यम्)

यदि—प्रकृतिवदनुकरणं भवतीत्युच्यते, अपशब्द एवासौ भवति कुमार्य् लृतक इत्याह ब्राह्मण्य् लृतक इत्याह । अपशब्दो ह्यस्य प्रकृतिः ॥

(प्रयोजनभाष्यम्)

न चापशब्दः प्रकृतिः न ह्यपशब्दा उपदिश्यन्ते । न चानुपदिष्टा प्रकृतिरस्ति ॥

(इत्यशक्तिजानुकरणखण्डनमण्डनम्)

(तृतीयप्रयोजनप्रत्याख्यानवार्तिकम्)

॥ एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः ॥

(भाष्यम्)

"एकदेशविकृतमनन्यवद्भवति" इति प्लुत्यादयोऽपि भविष्यन्ति ॥

(प्रयोजनवाद्याक्षेपभाष्यम्)

यदि एकदेशविकृतमनन्यवद्भवति इत्युच्येत, "राज्ञः क च" राजकीयम् "अल्लोपोऽन इति लोपः प्राप्नोति ॥

(प्रत्याख्यातृसमाधानभाष्यम्)

एकदेशविकृतमनन्यवत् षष्ठीनिर्दिष्टस्य ॥

(प्रयोजनवादिभाष्यम्)

यदि षष्ठीनिर्दिष्टस्येत्युच्यते, 'कॢ३प्तशिख' इति न प्राप्नोति । नह्यत्र ऋकारः षष्ठीनिर्दिष्टः ॥ कस्तर्हि? ॥ रेफः ॥

(प्रत्याख्यातृभाष्यम्)

ऋकारोऽप्यत्र षष्ठीनिर्दिष्टः ॥ कथम्? ॥ अविभक्तिको निर्देशः—कृप उः रः लः कृपो रो ल इति ॥

(प्रत्याख्यातुरेव भाष्यम्)

अथवा पुनरस्तु अविशेषेण ॥

(आक्षेपस्मारणभाष्यम्)

ननु चोक्तं राज्ञः क च राजकीयम् "अल्लोपोऽनः" इति प्राप्नोतीति ॥

(आक्षेपबाधकभाष्यम्)

नैष दोषः। वक्ष्यत्येतत्—"श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्" इति तत्प्रकृतमुत्तरत्रानुवर्तिष्यते—"अल्लोपोऽनः" नकारान्तस्येति ।

(प्रयोजनवाद्याक्षेपभाष्यम्)

इह तर्हि कॢ३प्तशिखः "अनृत" इति प्रतिषेधः प्राप्नोति ॥

(प्रत्याख्यातृसमाधानवार्तिकम्)

॥ रवत्प्रतिषेधाच्च ॥

(भाष्यम्)

रवत्प्रतिषेधाच्चैतत्सिध्यति । "गुरोरवतः" इति वक्ष्यामि ॥

( आक्षेपभाष्यम् )

**यदि 'अरवतः' इत्युच्यते, होतृ ऋकारः होतृ ऌकारः अत्र न प्राप्नोति ॥**

( आक्षेपबाधकभाष्यम् )

**गुरोरवतो ह्रस्वस्य इति वक्ष्यामि ॥**

( सिद्धान्तिभाष्यम् )

**स एष सूत्रभेदेन ऌकारोपदेशः प्लुत्याद्यर्थः सन्प्रत्याख्यायते, सैषा महतो वंशस्तंम्बाल्लट्वानुकृष्यते ॥ २ ॥**

एकदेशेति—एकदेशविकृतस्यानन्यत्वाद् प्लुत्यादयो भवन्ति । नचैवमेकदेशविकृतन्यायेन राजकीयमित्यत्र—अल्लोपोऽन इति लोपस्यादिति वाच्यम् । नकारस्यानुवृत्त्या नान्तानन्तस्य लोपविधानात्—नान्तत्वाभावेन तदप्राप्तेः । न च क्लृप्तशिखेत्यत्रानृत इति प्रतिषेधापत्तिः रवत्प्रतिषेधादेतत्सिद्धेः । होतृकार इत्यत्र प्लुतसिद्ध्यर्थं गुरोरवतो ह्रस्वस्येति कथनेनादोषात् । वस्तुतस्तु—एवंविधसूत्रभेदादियत्नेन ऌकारोपदेशप्रत्याख्यानस्य महतो वंशस्तम्बाल्लट्वानुकर्षणवदयुक्तत्वम् । लट्वा कश्चित्पक्षिविशेषः फलविशेषो वा । तद्यथा बह्वायाससाध्यमल्पफलं न युक्तम् । तथा ऌकारोपदेशप्रत्याख्यानमपीति ।

( शिवसूत्रे )

**एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥**

( संध्यक्षरेषु अतपरत्वस्थापनभाष्यम् )

**इदं विचार्यते—'इमानि संध्यक्षराणि तपराणि वोपदिश्येरन्' 'एत् ओत् ङ् ऐत् औत् च' इति, अतपराणि वा यथान्यासम्, इति**

( भाष्यम् )

**कश्चात्र विशेषः ? ॥**

( तपरपक्षदूषणवार्तिकम् )

**॥ संध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम् ॥**

( भाष्यम् )

संध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणं कर्तव्यम् ।

( तपरत्वपक्षदूषणवार्तिकम् )

॥ प्लुत्यादिष्वज्विधिः ॥

( भाष्यम् )

प्लुत्यादिष्वजाश्रयो विधिर्न सिध्यति ॥ गो ३ त्रात नौ ४ त्रात इत्यत्र "अनचि च" इत्यत्र उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोति । इह च प्रत्यङ्ङै ४ तिकायन उदङ्ङौ ४ पगव इति "अचि" इति ङमुडागमो न प्राप्नोति ॥

( तपरत्वपक्षदूषणवार्तिकम् )

॥ प्लुतसंज्ञा च ॥

( भाष्यम् )

प्लुतसंज्ञा च न सिध्यति ॥ ऐ३तिकायनं औ३पगवम् "ऊकालोज्ह्रस्वदीर्घप्लुतः" इति प्लुतसंज्ञा न प्राप्नोति ॥

( अतपरपक्षाभ्युपगमभाष्यम् )

सन्तु तर्ह्यतपराणि ।

( अतपरपक्षदूषणवार्तिकम् )

॥ अतपर एच् इग्घ्रस्वादेशे ॥

( भाष्यम् )

यद्यतपराणि "एच इग्घ्रस्वादेशे" इति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ एचो ( ङो ) ह्रस्वादेशशासनेष्वर्ध एकारोऽर्ध ओकारो वा मा भूदिति ॥

( प्रतिबंदीसमाधानभाष्यम् )

ननु च यस्यापि तपराणि, तेनाप्येतद्वक्तम् । इमावैचौ समाहारवर्णौ–मात्राऽवर्णस्य; मात्रेवर्णोवर्णयोस्तयोर्ह्रस्वा-

देशशासनेषु कदाचिदवर्णः स्यात् कदाचिदिवर्णोवर्णौ; मा कदाचिदवर्णो भूदिति ॥

( प्रतिबन्दीनिराकरणभाष्यम् )

प्रत्याख्यायत एतत्—"ऐचश्चोत्तरभूयस्त्वात्" इति

( समाधानसिद्धान्तिभाष्यम् )

यदि प्रत्याख्यानपक्षः, इदमपि प्रत्याख्यायते-"सिद्धमेङः सस्थानत्वात्" इति ॥

( आक्षेपभाष्यम् )

ननु चैङः सस्थानतरावर्ध एकारोऽर्ध ओकारः ॥

( समाधानभाष्यम् )

न तौ स्तः । यदि हि तौ स्यातां तावेवायमुपदिशेत् ॥

( आक्षेपभाष्यम् )

ननु च भोश्छन्दोगानां सात्यमुग्रिराणायणीया अर्धमेकारमर्धमोकारं चाधीयते-सुजाते एश्वसूनृते, अध्वर्यो ओद्रिभिः सुतम्, शुक्रं ते एन्यत्, यजतं ते एन्यत्-इति ॥

( समाधानभाष्यम् )

पारिषदकृतिरेषा तत्रभवताम् । नैव हि लोके नान्यस्मिन्वेदेऽर्ध एकारोऽर्ध ओकारो वास्ति ॥

( अतपरपक्षदूषणवार्तिकम् )

॥ एकादेशे दीर्घग्रहणम् ॥

( भाष्यम् )

एकादेशे दीर्घग्रहणं कर्तव्यम्—"आद्गुणो दीर्घः" "वृद्धिरेचि दीर्घः" इति ॥ किं प्रयोजनम्? ॥ आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा इन्द्र खट्वेन्द्रः, खट्वा उदकं खट्वोदकं, खट्वा ईषा खट्वेषा, खट्वा ऊढा खट्वोढा, खट्वा

एलका खट्वैलका, खट्वा ओदनः खट्वौदनः, खट्वा ऐतिकायनः खट्वैतिकायनः, खट्वा औपगवः खट्वौपगव इति ॥

( आक्षेपभाष्यम् )

तत्तर्हि दीर्घग्रहणं कर्तव्यम् ॥

( समाधानभाष्यम् )

न कर्तव्यम् । उपरिष्टाद्योगविभागः करिष्यते—"अकः सवर्णे" एको भवति ॥ ततो—"दीर्घः" दीर्घश्च स भवति, यः स 'एकः पूर्वपरयोः' इत्येवं निर्दिष्ट इति ॥

( आक्षेपभाष्यम् )

इहापि तर्हि प्राप्नोति—पशुं विद्धं पचन्तीति ॥

( समाधानभाष्यम् )

नैष दोषः । इह तावत्पशुमिति, "अम्येकः" इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम्—यथाजातीयकः पूर्वस्तथाजातीयक उभयोर्यथा स्यादिति ॥ विद्धमिति । पूर्व इत्येवानुवर्तते ॥ अथवाचार्यप्रवृत्तिर्ज्ञापयति—नानेन संप्रसारणस्य दीर्घो भवतीति । यदयं हल उत्तरस्य संप्रसारणस्य दीर्घत्वं शास्ति ॥

पचन्तीति—"अतो गुणे परः" इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद्रूपग्रहणं करोति, तस्यैतत्प्रयोजनम्—यथाजातीयकं परस्य रूपं तथाजातीयकमुभयोर्यथा स्यादिति ॥

( आक्षेपभाष्यम् )

इह तर्हि खट्वाइयं मालाइयं इति दीर्घवचनादकारो न, अनान्तर्यादेकारौकारौ न ॥ [ तत्र को दोषः ] विगृहीतस्य श्रवणं प्रसज्येत ॥

(समाधानभाष्यम्)

न ब्रूमो यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति ॥ किं तर्हि ? ॥ यत्र क्रियमाणे न दोषस्तत्र कर्तव्यमिति ॥

(आक्षेपभाष्यम्)

क्व च क्रियमाणे न दोषः ? ॥

(समाधानभाष्यम्)

संज्ञाविधौ । वृद्धिरादैज् दीर्घः, अदेङ्गुणो दीर्घ इति ॥

(आक्षेपभाष्यम्)

तत्तर्हि दीर्घग्रहणं कर्त्तव्यम् ॥

(सिद्धान्तिसमाधानभाष्यम्)

न कर्तव्यम् ॥

(आक्षेपभाष्यम्)

कस्मादेवान्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ? ॥

(समाधानभाष्यम्)

तपरे गुणवृद्धी ॥

(आक्षेपभाष्यम्)

ननु च तः परो यस्मात्सोऽयं तपरः ॥

(समाधानभाष्यम्)

नेत्याह, तादपि परस्तपर इति ॥

(आक्षेपभाष्यम्)

यदि, तादपि परस्तपरः "ऋदोरप्" इतीहैव स्यात्— यवः स्तवः; लवः, पवः इत्यत्र न स्यात् ॥

(समाधानभाष्यम्)

नैष तकारः ॥ कस्तर्हि ? ॥ दकारः ॥

(आक्षेपभाष्यम्)

किं दकारे प्रयोजनम् ? ॥

(प्रतिबन्दीसमाधानभाष्यम्)

**अथ किं तकारे ? । यद्यसन्देहस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपीति ॥**

(इति सन्ध्यक्षरेष्वतपरपाठनिर्णयः)

एओङिति—नन्वेवं सूत्रसत्वे—एङ्ऐच् पदाभ्यां त्रिमात्रिकाणामपि गुणवृद्धिसंज्ञापत्तौ, खट्वेन्द्रः खट्वेष इत्यत्रान्तर्यात्त्रिमात्रचतुर्मात्राणामकाररूपगुणापत्तिः स्यात् । खट्वौदन इत्यत्र चतुर्मात्रौकारवृद्ध्यापत्तिः स्यात् । न च एत् ओत् ङ्, ऐत् औदिति न्यासेन वारणम् । एङ् ऐच् संज्ञा तपरत्वाद्दीर्घस्यैव स्यात्-नतु त्रिमात्रिकादीनामिति वाच्यम् । तपरोच्चारणे गौरवम् । त्रिमात्रिकस्याच्त्वानापत्त्या गोत्रातः नौत्रात इत्यादौ—अनचि चेति द्वित्वानापत्तिः । प्रत्यैङ्कतिकायन इत्यत्राच्त्वाभावात्-ङमुण् न प्राप्नोतीति वाच्यम् । एवमच्त्वाभावात्त्रिमात्रिकस्य प्लुतसंज्ञापि न स्यादिति चेत् । न । अकः सवर्णे—इत्येको योगः । ततो दीर्घ इत्यपरो योगः । पूर्वपरयोः स्थाने विहितैकादेशो दीर्घ एव भवति । न च पशुं विद्धं पचन्तीत्यत्र दीर्घापत्तिरिति वाच्यम् । अमि पूर्व इत्यत्र पूर्वग्रहणात्संप्रसारणाच्चेत्यत्र पूर्व इत्यस्यानुवृत्तेस्तत्सामर्थ्यात्पूर्वजातीयकस्यैव विधानेन पूर्वस्य दीर्घत्वाभावेन दीर्घाप्राप्तेः । पचन्तीत्यत्र रूपग्रहणात्परजातीयकस्य विधानेन दोषाभावात् । न च खट्वर्श्य इत्यत्र दीर्घवचनादकारो न । अनान्तर्यादेकारोकारौ न । तथा च विगृहीतस्य श्रवणप्रसङ्ग इति वाच्यम् । अकः सवर्ण इत्यत्र दीर्घ इति योगविभागमकृत्वैव गुणवृद्धिसंज्ञाविधौ दीर्घग्रहणकरणेन त्रिमात्रिकादीनां गुणवृद्धिसंज्ञाया अप्राप्त्या दोषाभावात् । यद्वा एङ्—आदैच्संज्ञयोर्गुणवृद्धिसंज्ञाविधौ तात्परत्वेन तपरसूत्रेण त्रिमात्रिकाणां तदप्राप्तेः । ऋदोरबित्यत्र दकार एव, न तु तकार इति ।

(अथ वर्णैकदेशग्रहणाग्रहणनिर्णयः)

(भाष्यम्)

इदं विचार्यते—य एते वर्णेषु वर्णैकदेशा वर्णान्तर-समानाकृतय एतेषामवयवग्रहणेन ग्रहणं स्याद्वा न वेति॥ कुतः पुनरियं विचारणा?॥ इह हि समुदाया अप्युपदिश्यन्ते, अवयवा अपि। अभ्यन्तरश्च समुदायेऽवयवः, तद्यथा वृक्षः प्रचलन् सहावयवैः प्रचलति। तत्र समुदायस्थस्यावयवस्यावयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा॥

(भाष्यम्)

कश्चात्र विशेषः?।

(ग्रहणपक्ष आक्षेपवार्तिकम्)

वर्णैकदेशा वर्णग्रहणेन चेत्संध्यक्षरे समानाक्षर-विप्रतिषेधः॥

(भाष्यम्)

वर्णैकदेशा वर्णग्रहणेन चेत्संध्यक्षरे समानाक्षराश्रयो विधिः प्राप्नोति। स प्रतिषेध्यः॥ अग्ने इन्द्र वायो उदकम्, "अकः सवर्णे दीर्घः" इति दीर्घत्वं प्राप्नोति॥

(आक्षेपान्तरवार्तिकम्)

॥ दीर्घे ह्रस्वविधिप्रतिषेधः॥

(भाष्यम्)

दीर्घे ह्रस्वाश्रयो विधिः प्राप्नोति, स प्रतिषेध्यः। आलूय प्रलूय "ह्रस्वस्य पिति कृति तुक्" इति तुक् प्राप्नोति॥

(आक्षेपबाधकभाष्यम्)

नैष दोषः, आचार्यप्रवृत्तिर्ज्ञापयति न दीर्घे ह्रस्वाश्रयो विधिर्भवति, इति। यदयं दीर्घाच्छे तुकं शास्ति॥

(आक्षेपसाधकभाष्यम्)

नैतदस्ति ज्ञापकम्, अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ किम्? ॥ "पदान्ताद्वा" इति विभाषां वक्ष्यामीति ॥

(आक्षेपबाधकभाष्यम्)

तत्तर्हि योगविभागं करोति । इतरथा हि "दीर्घात्पदान्ताद्वा" इत्येव ब्रूयात् ॥

(आक्षेपभाष्यम्)

इह तर्हि-खट्वाभिः मालाभिः, अतो भिस ऐस्" इत्यैस्भावः प्राप्नोति ॥

(आक्षेपबाधकभाष्यम्)

तपरकरणसामर्थ्यान्न भविष्यति ॥

(आक्षेपभाष्यम्)

इह तर्हि याता वाता "अतो लोप आर्द्धधातुके" इत्यकारलोपः प्राप्नोति ॥

(आक्षेपबाधकभाष्यम्)

ननु चात्रापि तपरकरणसामर्थ्यादेव न भविष्यति ॥

(आक्षेपसाधकभाष्यम्)

अस्ति ह्यन्यत्तपरकरणे प्रयोजनम् ॥ किम्?

॥ सर्वस्य लोपो मा भूदिति ॥

(प्रयोजनबाधकभाष्यम्)

अथ क्रियमाणेऽपि तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवति? ॥

(प्रयोजनसाधकभाष्यम्)

परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च ॥

( समाधानसाधकभाष्यम् )

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति–'नाकारस्थस्याकारस्य लोपो भवति' इति । यदयं "आतोऽनुपसर्गे कः" इति ककारमनुबन्धं करोति ॥ कथं कृत्वा ज्ञापकम् ? ॥ कित्करणे एतत्प्रयोजनम्–कितीत्याकारलोपो यथा स्यादिति । यद्याकारस्थस्याकारलोपः स्यात्, कित्करणमनर्थकं स्यात् । परस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपे हि सिद्धं रूपं स्यात्–गोदः कम्बलद इति । पश्यति त्वाचार्यो नाकारस्थस्याकारस्य लोपः स्यादिति, अतः ककारमनुबन्धं करोति ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात्–"तुन्दशोकयोः परिमृजापनुदोः" इति ॥

( समाधानसाधकभाष्यम् )

यत्तर्हि "गापोष्टक्" इत्यनन्यार्थं ककारमनुबन्धं करोति ॥

( आक्षेपवार्तिकम् )

॥ एकवर्णवच्च ॥

( भाष्यम् )

एकवर्णवच्च दीर्घो भवतीति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ वाचा तरतीति ह्यज्लक्षणष्ठन्मा भूदिति । इह च वाचो निमित्तम्, "तस्य निमित्तं संयोगोत्पत्तौ" इत्यनुवर्तमाने "गोद्व्यचः" इति ह्यज्लक्षणो यन्मा भूदिति ॥

( आक्षेपबाधकभाष्यम् )

अत्रापि गोनौग्रहणं ज्ञापकम्–'दीर्घाद्ध्यज्लक्षणो विधिर्न भवति' इति ॥

( सर्वाक्षेपपरिहारभाष्यम् )

अयं तु सर्वेषामेव परिहारः-

( सिद्धान्तसमाधानवार्तिकम् )

॥ नाव्यपवृक्तस्यावयवे तद्विधिर्यथा द्रव्येषु ॥

( भाष्यम् )

नाव्यपवृक्तस्यावयवस्यावयवाश्रयो विधिर्भवति यथा द्रव्येषु। तद्यथा द्रव्येषु "सप्तदशसामिधेन्यो भवन्ति" इति न सप्तदशारत्निमात्रं काष्ठमग्नावभ्याधीयते ॥

( दृष्टान्तवैषम्यभाष्यम् )

विषम उपन्यासः, प्रत्यृचं चैव हि तत्कर्म चोद्यते । असम्भवश्चाग्नौ वेद्यां च ॥

( दृष्टान्तरभाष्यम् )

यथा तर्हि "सप्तदशप्रादेशमात्रीराश्वत्थीः समिधोऽभ्यादधीत" इति न सप्तदशप्रादेशमात्रं काष्ठमग्नावभ्याधीयते ॥

( दृष्टान्तवैषम्यभाष्यम् )

अत्रापि प्रतिप्रणवं चैतत्कर्म चोद्यते । तुल्यश्चासम्भवोऽग्नौ वेद्यां च ॥

( सिद्धान्तिदृष्टान्तभाष्यम् )

यथा तर्हि "तैलं न विक्रेतव्यम्" "मांसं न विक्रेतव्यम्" इति व्यपवृक्तं च न विक्रीयते, अव्यपवर्गगावः सर्षपाश्च विक्रीयन्ते । तथा "लोमनखं स्पृष्ट्वा शौचं कर्तव्यम्" इति व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्तव्यम्, अव्यपवृक्ते कामचारः ॥

( आक्षेपभाष्यम् )

यत्र तर्हि व्यपवर्गोऽस्ति ॥ क्व च व्यपवर्गोऽस्ति? ॥ सन्ध्यक्षरेषु ॥

(समाधानवार्तिकम्)

॥ सन्ध्यक्षरेषु विवृतत्वात् ॥

(भाष्यम्)

यदत्रावर्णं, विवृततरं तदन्यस्मादवर्णात् । ये-अपीवर्णोवर्णे, विवृततरे ते अन्याभ्यामिवर्णोवर्णाभ्याम् ॥

अवयवग्रहणेति—आकारे अकारसदृशौ अ-अ-इति द्वौ-अवयवौ। ऋकारऌकारयोः रेफलकारसदृशौ-अवयवौ । सन्ध्यक्षरेषु-अकारेकारोकारसदृशा अवयवाः सन्ति, तेषु अ, इ, उ, र, ल, इत्येवं स्वतन्त्रवर्णप्रयुक्तं कार्यं भवति न वेति विप्रतिपत्तिः । तत्र वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति स्वीकारे अग्ने इन्द्र इत्यत्र सवर्णदीर्घः आऌयेत्यत्र ह्रस्वस्येति तुक्, खट्वाभिरित्यत्र ऐस्, यातेत्यत्र—अतो लोपः, वाक्शब्दाद्व्यञ्जलक्षणष्ठन्-इत्याद्यापत्तयस्तु न । दीर्घात्पदान्ताद्वेति योगविभागसामर्थ्यात्-अत इति तपरकरणसामर्थ्यात् गोनौग्रहणसामर्थ्यात्तत्तत्कार्यवारणसम्भवात् । अयं तु पूर्वोक्तानां सर्वेषामेव परिहारः । नाव्यपवृक्तावयवस्य । तद्विधिर्यथा द्रव्येष्विति । अव्यपवृक्तस्य—अभिन्नबुद्धिविषयस्य-समुदायस्य योऽवयवः, तस्मिन्पृथग्भूतवर्णविधिर्न भवतीत्यर्थः । तद्यथा लोके तैलमित्यादि । व्यपवृक्तेषु, सन्ध्यक्षरावयवेषु विवृततरत्वाच्छुद्धविवृतैरवर्णेवर्णोवर्णैर्ग्रहणासम्भवाद्वर्णैकदेशा इति पक्षे न किञ्चिद्दूषणम् ।

(अग्रहणपक्षाभ्युपगमभाष्यम्)

अथवा पुनर्न गृह्यन्ते ।

(अग्रहणपक्षदूषणवार्तिकम्)

॥ अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणम् ॥

(भाष्यम्)

अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्तव्यम् । "तस्मान्नुड् द्विहलः" ऋकारे चेति वक्तव्यम् ॥

इहापि यथा स्यात्-आनृधतुः आनृधुरिति । यस्य पुनर्गृह्यन्ते 'द्विहलः' इत्येव तस्य सिद्धम् ॥

(अग्रहणपक्षदूषणोद्धारभाष्यम्)

यस्यापि न गृह्यन्ते, तस्याप्येष न दोषः । द्विहल्ग्रहणं न करिष्यते । तस्मान्नुड् भवतीत्येव ॥

(आक्षेपभाष्यम्)

यदि न क्रियते, आटतुः आटुरित्यत्रापि प्राप्नोति ॥

(आक्षेपबाधकभाष्यम्)

अश्नोतिग्रहणं नियमार्थं भविष्यति-अश्नोतेरेवावर्णोपधस्य नान्यस्यावर्णोपधस्येति ॥ [ नुड्विधिः ]

(आक्षेपवार्तिकखण्डनभाष्यम्)

लादेशे च ऋकारग्रहणं कर्तव्यम् । "कृपो रो लः" ऋकारस्य चेति वक्तव्यम् । इहापि यथा स्यात्-क्लृप्तः क्लृप्तवानिति । यस्य पुनर्गृह्यन्ते, र इत्येव तस्य सिद्धम् ॥

(आक्षेपनिरासभाष्यम्)

यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । ऋकारोऽप्यत्र निर्दिश्यते ॥ कथम् ? ॥ अविभक्तिको निर्देशः-कृप, उः, रः, लः="कृपो रो लः" इति ॥ अथवा उभयतः स्फोटमात्रं निर्दिश्यते रश्रुतेर्लश्रुतिर्भवतीति [ लादेशः ] ॥

(आक्षेपवार्तिकखण्डनभाष्यम्)

विनामे ऋकारग्रहणं कर्तव्यम् । "रषाभ्यां नो णः समानपदे" ऋकाराच्चेति वक्तव्यम् । इहापि यथा स्यात्-मातॄणां पितॄणामिति । यस्य पुनर्गृह्यन्ते रषाभ्यामित्येव तस्य सिद्धम् ॥

(अग्रहणवादिभाष्यम्)

न सिध्यति । यत्तद्रेफात्परं भक्तेस्तेन व्यवहितत्वान्न प्राप्नोति ॥

(ग्रहणवादिभाष्यम्)

मा भूदेवम् । अड्व्यवाय इत्येव सिद्धम् ॥

(अग्रहणवादिभाष्यम्)

न सिध्यति । वर्णैकदेशाः के वर्णग्रहणेन गृह्यन्ते? । ये व्यपवृक्ता अपि वर्णा भवन्ति । यच्चापि रेफात्परं भक्तेः, न तत्क्वचिदपि व्यपवृक्तं दृश्यते ॥

(ग्रहणवादिभाष्यम्)

एवं तर्हि योगविभागः करिष्यते, "रषाभ्यां नो णः समानपदे" ततः 'व्यवाये' व्यवाये च रषाभ्यां नो णो भवतीति । ततः—"अट्कुप्वाङ्नुम्भिः" इति ।

इदमिदानीं किमर्थम्? ।

नियमार्थम्—एतैरेवाक्षरसमाम्नायिकैर्व्यवाये, नान्यैः, इति ॥

(अग्रहणवादिभाष्यम्)

यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—भवत्यृकारान्नोणत्वमिति । यदयं क्षुभ्नादिषु नृनमनशब्दं पठति ॥

(ग्रहणवादिभाष्यम्)

नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात्—नार्मनिः ॥

(अग्रहणवादिभाष्यम्)

यत्तर्हि तृप्नोतिशब्दं पठति ॥

(एकदेशिभाष्यम्)

यच्चापि नृनमनशब्दं पठति ॥

(बाधकस्मारणभाष्यम्)

ननु चोक्तं वृद्ध्यर्थमेतत्स्यात्॥

(समाधानभाष्यम्)

बहिरङ्गावृद्धिरन्तरङ्गं णत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे॥ अथवा उपरिष्टाद्योगः करिष्यते—ऋतः नो णो भवति। ततः "छन्दस्यवग्रहात्" ऋत इत्येव॥

(आक्षेपवार्तिकम्)

॥ प्लुतावैच इदुतौ॥

(भाष्यम्)

एतच्च वक्तव्यम्। यस्य पुनर्गृह्यन्ते गुरोष्टेरित्येव प्लुत्या तस्य सिद्धम्॥

(आक्षेपबाधकभाष्यम्)

यस्यापि न गृह्यन्ते तस्याप्येष न दोषः। क्रियत एतन्न्यास एव॥

(आक्षेपवार्तिकम्)

॥ तुल्यरूपे संयोगे द्विव्यञ्जनविधिः॥

(भाष्यम्)

तुल्यरूपे संयोगे द्विव्यञ्जनाश्रयो विधिर्न सिध्यति—कु२क्कुटः पि३प्पली पि३त्तमिति। यस्य पुनर्गृह्यन्ते तस्य द्वौ ककारौ, द्वौ पकारौ, द्वौ तकारौ॥

(आक्षेपबाधकभाष्यम्)

यस्यापि न गृह्यन्ते तस्यापि द्वौ ककारौ, द्वौ पकारौ द्वौ तकारौ॥ कथम्?॥ मात्रा कालोऽत्र गम्यते। न च मात्रिकं व्यञ्जनमस्ति। अनुपदिष्टं सत्कथं शक्यं विज्ञातुम्?। असच्च कथं शक्यं प्रतिपत्तुम्?॥

(आक्षेपसाधकभाष्यम्)

**यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रैतन्नास्ति-'अण् सवर्णान् गृह्णाति' इति । इह तु कथम्-सय्ँय्यन्ता, सवँवत्सरः, यल्ँलोकम्, तल्ँलोकमिति यत्रैतदस्त्यण् सवर्णान् गृह्णातीति ? ॥**

(आक्षेपबाधकभाष्यम्)

**अत्रापि मात्राकालो गृह्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुम् ? । असच्च कथं शक्यं प्रतिपत्तुम् ? ॥**

न गृह्यत इति पक्षोऽप्यदुष्ट एव । अग्रहणेऽपि नुड्विधिलादेशविनामेषु-ऋकारग्रहणस्य नावश्यकता । तस्मान्नुडिति सूत्रं द्विहल्ग्रहणरहितम् । तेनानृधुरित्यत्र नुट् । एवं सिद्धे सति-अश्नोतिग्रहणं नियमार्थम् । अश्नोतेरेवावर्णोपधस्येति । तेनाट्टुरित्यत्र न नुट् । लादेशे कृपो रो ल इत्यत्र कृप उः, रः, लः,-इति छेदेन, ऋकारोऽपि निर्दिष्ट एव । विनामे नाम णत्वविधौ-ऋकाराण्णत्वं भवतीति विज्ञायते । क्षुभ्नादिषु तृप्नोति शब्दपाठसामर्थ्यात् । यद्वा ऋत इति योगो विभज्यते । ऋतः नो णो भवतीत्यर्थः । ततः, छन्दसीत्यवग्रहात्-ऋत इत्येव । क्लृतावै च इदुतौ-इति सूत्रं तु अस्त्येव । तुल्यरूपावयवके संयोगे तु वर्णद्वयरूपतैव । कुक्कुटः पिप्पलीत्यादौ मात्रिकव्यञ्जनासम्भवात्संयन्तेत्यादावपि, सानुनासिकनिरनुनासिकौ द्वावेवात्र वर्णावित्यत्र पक्षेऽपि दोषाभाव इत्यलम् ॥

(शिवसूत्रम्)

**॥ हयवरट् ॥**

(अथ हकारस्य द्विरुपदेशाधिकरणम्)

(आक्षेपभाष्यम्)

**सर्वे वर्णाः सकृदुपदिष्टाः, अयं हकारो द्विरुपदिश्यते-**

पूर्वश्चैव परश्च । यदि पुनः पूर्व एवोपदिश्येत, पर एव वा । कश्चात्र विशेषः ? ॥

(पूर्वत्रानुपदेशे दूषणवार्तिकम्)

॥ हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणम् ॥

(भाष्यम्)

हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणं कर्तव्यम्, "आतोऽटि नित्यम्" "शश्छोऽटि" "दीर्घादटि समानपादे" हकारे चेति वक्तव्यम् ॥ इहापि यथा स्यात् महाँ हि सः ॥

(पूर्वत्रानुपदेशे दूषणवार्तिकम्)

॥ उत्त्वे च ॥

(भाष्यम्)

उत्त्वे हकारग्रहणं कर्तव्यम् । "अतोरोरप्लुतादप्लुते हशि च" हकारे चेति वक्तव्यम् । इहापि यथा स्यात्–पुरुषो हसति ब्राह्मणो हसतीति ॥

(पूर्वोपदेशाङ्गीकारभाष्यम्)

अस्तु तर्हि पूर्वोपदेशः ।

(परत्रानुपदेशे दूषणवार्तिकम्)

॥ पूर्वोपदेशे कित्वक्सेड्विधयोझल्ग्रहणानि च ॥

(भाष्यम्)

यदि पूर्वोपदेशः कित्वं विधेयम्–स्निहित्वा स्नेहित्वा सिस्निहिषति सिस्नेहिषति रलोव्युपधाद्धलादेः–इति कित्वं न प्राप्नोति ॥

कसविधिः–क्सश्च विधेयः–अधुक्षत् अलिक्षत् "शल इगुपधादनिटः क्सः" इति क्सो न प्राप्नोति ॥

इड्विधिः इट् च विधेयः रुदिहि वलादिलक्षण इण् न प्राप्नोति ॥

झल्ग्रहणानि च ॥

किम् ? ॥

अहकाराणि स्युः ॥ तत्र को दोषः ? ॥ "झलो झलि" इतीह न स्यात्–अदाग्धाम् अदाग्धम् । तस्मात्पूर्वश्चैवोपदेष्टव्यः परश्च ॥

हयवरडिति–अत्र सूत्रे हकारोपदेशः, अट्, हश्ग्रहणेषु हकारग्रहणार्थः । "दीर्घादटि समानपादे" महांहि सः "हशि च" पुरुषो हसति । एवमिण् अश्प्रत्याहारेषु ग्रहणेन रुदिहीत्यत्र वलादिलक्षण इट् देवा हसन्तीत्यत्र भोभगोऽघेति यत्वं चेति फलम् । हलसूत्रे हकारोपदेशः, वल, रल, झल्, शल्, प्रत्याहारेषु हकारग्रहणार्थः । वल् रुदिहि "रुदादिभ्य" इतीट् । रल्–स्निहि वा स्नेहित्वा "रलोऽव्यपधादिति" वा कित्वम् । झल्–अदाग्धाम्–"झलो झलीति" सलोपः । शल्–अक्षधुत्–"शलउपधेति"–क्सः ।

(उपसंहारभाष्यम्)

यदि च किंचिदन्यत्राप्युपदेशे प्रयोजनमस्ति तत्राप्युपदेशः कर्तव्यः ॥

(अथ रेफोपदेशस्थानाधिकरणम्)

इदं विचार्यते–अयं रेफः, यकारवकाराभ्यां पूर्व एवोपदिश्येत–हरयवडिति पर एव वा यथान्यासमिति । कश्चात्र विशेषः ? ॥

(यथान्यासोपदेशदूषणवार्तिकम्)

रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः ॥

(भाष्यम्)

रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्तव्यः ॥

अनुनासिकस्य स्वर्नयति प्रातर्नयति । "यरोऽनुनासिकेऽनुनासिको वा" इत्यनुनासिकः प्राप्नोति ॥ द्विर्वचनस्य–मद्रह्रदः भद्रह्रदः "यरः" इति द्विर्वचनं प्राप्नोति । परसवर्णस्य–कुण्डं रथेन वनं रथेन "अनुस्वारस्य ययि" इति परसवर्णः प्राप्नोति ॥

( इति यथान्यासे दूषणानि )

अस्तु तर्हि पूर्वोपदेशः ।

( दूषणवार्तिके )

॥ पूर्वोपदेशे कित्वप्रतिषेधो व्यलोपवचनं च ॥

( भाष्यम् )

यदि पूर्वोपदेशः कित्वं प्रतिषेध्यम् । देवित्वा दिदेविषति "रलोऽव्युपधादिति" । कित्वं प्राप्नोति ॥

( दूषणनिराकरणभाष्यम् )

नैष दोषः, नैवं विज्ञायते–'रलः व्युपधादिति' किं तर्हि ? ॥ "रलः, अव्युपधादिति" ॥

किमिदम्, अव्युपधादिति ? ॥

अव्कारान्तादव्युपधाद्व्युपधादिति ॥

( भाष्यम् )

व्यलोपवचनं च ॥ व्योश्च लोपो वक्तव्यः । गौधेरः पचेरन् यजेरन् 'जीवेरदानुः' जीरदानुः वलीति लोपो न प्राप्नोति ॥

( दूषणनिराकरणभाष्यम् )

नैष दोषः, रेफोऽप्यत्र निर्दिश्यते–"लोपोव्योर्वलि" इति रेफे च वलि चेति ॥

( यथान्यासाभ्युपगमभाष्यम् )

अथवा पुनरस्तु परोपदेशः ॥

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम् रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः इति ॥**

(समाधानभाष्यम्)

**अनुनासिकपरसवर्णयोस्तावत्प्रतिषेधो न वक्तव्यः, रेफोष्मणां सवर्णा न सन्ति ॥**

(भाष्यम्)

**द्विर्वचनेऽपि । नेमौ रहौ कार्यिणौ द्विर्वचनस्य ॥ किन्तर्हि ? ॥ निमित्तमिमौ रहौ द्विर्वचनस्य । तद्यथा—'ब्राह्मणा भोज्यन्तां माठरकौण्डिण्यौ परिवेविषाताम्' इति नेदानीं तौ भुञ्जाते ॥**

हयवरडिति—नन्वेवं यकारवकाराभ्यां परत्र रेफस्योपदेशे स्वर्नयतीत्यत्र 'यरोऽनुनासिकेति' अनुनासिकः, मद्रह्रदः—"अचोरहाभ्यामिति" द्वित्वम्, कुण्डं रथेन—"वापदान्तस्येति" परसवर्णश्च प्राप्नुवन्तीति चेत् । न । हरयवडिति न्यासेन ययि, यरि च रेफाभावे नोक्तदोषाभावात् । न च देवित्वादिवित्वेत्यत्र रलोऽव्युपधादिति वा कित्वम् । रलोऽव्युपधादिति पदच्छेदादवकारान्तादित्यर्थेन दोषाभावात् । गौधेर इत्यत्र यलोपार्थं लोपोव्योर्वलीत्यत्र रेफस्य प्रश्लेषेण रेफे वलि च परतो लोप इत्यर्थेन दोषाभावात् । अथवा हयवरडिति न्यासेऽपि दोषाभावः । यरोऽनुनासिक इत्यत्र सवर्णपदानुवृत्त्या रेफस्यानुनासिकसवर्णाभावान्नोक्तदोषः । मद्रह्रद इत्यत्र, अचोरहाभ्यामिति द्वित्वन्तु न । माठरपरिवेषणन्यायेन रेफातिरिक्तत्वेन यरपदार्थे संकोचेन तादृशयराभावादेव द्वित्वाप्राप्तिः । अनुस्वारस्य ययीत्यत्र यरोऽनुनासिक इत्यतः, अनुनासिकपदानुवृत्त्या अनुनासिकपरसवर्णविधानेन रेफस्यानुनासिकसवर्णाप्रसिद्ध्या कुण्डं रथेनेत्यादौ दोषाभावात् । तथा च रेफस्य पूर्वत्र परत्र वा पाठे न कश्चिद्विशेष इति तत्त्वम् ।

(अथायोगवाहोपदेशाधिकरणम्)

(भाष्यम्)

इदं विचार्यते—इमेऽयोगवाहा न क्वचिदुपदिश्यन्ते, श्रूयन्ते च । तेषां कार्यार्थ उपदेशः कर्तव्यः ॥ के पुनरयोगवाहाः? ॥ विसर्जनीयाजिह्वामूलीयोपध्मानीयानुस्वारनासिक्ययमाः । कथं पुनरयोगवाहाः? ॥ यदयुक्तावहन्ति, अनुपदिष्टाश्च श्रूयन्ते ॥

(भाष्यम्)

क्व पुनरेषामुपदेशः कर्तव्यः? ॥

(सिद्धान्तवार्तिकम्)

॥ अयोगवाहानामट्सु णत्वम् ॥

(भाष्यम्)

अयोगवाहानामट्सूपदेशः कर्तव्यः ॥ किं प्रयोजनम्? ॥ णत्वम् । उरःकेण उरᳵकेण उरःपेण उरᳵपेण । "अड्व्यवाये" इति णत्वं सिद्धं भवति ॥

(सिद्धान्तवार्तिकम्)

॥ शर्षु जश्भावषत्वे ॥

(भाष्यम्)

शर्षूपदेशः कर्तव्यः ॥ किं प्रयोजनम्? ॥ जश्भावषत्वे । अयमुब्जिरुपध्मानीयोपधः पठ्यते । तस्य जश्त्वे कृते उब्जिता उब्जितुमित्येतद्रूपं यथा स्यात् ॥

(उपध्मानीयोपधदूषणभाष्यम्)

यद्युब्जिरुपध्मानीयोपधः पठ्यते, उब्जिजिषतीत्युपध्मानीयादेरेव द्विर्वचनं प्राप्नोति । दकारोपधे पुनर् "नन्द्राः संयोगादयः" इति प्रतिषेधः सिद्धो भवति ॥

(दकारोपधदूषणभाष्यम्)

यदि दकारोपधः पठ्यते, का रूपसिद्धिः-उब्जिता उब्जितुमिति ? ॥

(दकारोपधदूषणनिराकरणभाष्यम्)

असिद्धं भ उदूजेः । इदमस्ति "स्तोः श्चुना श्चुः" इति, ततो वक्ष्यामि "भ उदूजेः" उदूजेः श्चुना सन्निपाते भो भवतीति ॥

(आक्षेपभाष्यम्)

तत्तर्हि वक्तव्यम् ॥

(समाधानभाष्यम्)

न वक्तव्यम् निपातनादेव सिद्धम् । किं निपातनम् ? ॥ "भुजन्युब्जौ पाण्युपतापयोः" इति ॥

(समाधानबाधकभाष्यम्)

इहापि तर्हि प्राप्नोति-अभ्युद्गः समुद्ग इति ॥

(समाधानसाधकभाष्यम्)

अकुत्वविषये तन्निपातनम् ॥ अथवा नैतदुब्जे रूपं, गमेरेतद्डुपसर्गाड्डो विधीयते । अभ्युद्गतोऽभ्युद्गः समुद्गतः समुद्ग इति ॥

(प्रयोजनभाष्यम्)

षत्वं च प्रयोजनम् । सर्पिःषु धनुःषु । "शर्व्यवाये" इति षत्वं सिद्धं भवतीति "नुम्विसर्जनीयशर्व्यवायेऽपि" इति विसर्जनीयग्रहणं न कर्तव्यं भवति ॥

(आक्षेपभाष्यम्)

नुमश्चापि तर्हि ग्रहणं शक्यमकर्तुम् ।

कथं सर्पींषि धनूंषि ? ।

अनुस्वारे कृते "शर्व्यवाये" इत्येव सिद्धम् ॥

(समाधानभाष्यम्)

अवश्यं नुमो ग्रहणं कर्तव्यम् । अनुस्वारविशेषणं नुम्ग्रहणम्, नुमो योऽनुस्वारस्तत्र यथा स्यात्, इह मा भूत् पुंस्विति ॥

(भाष्यम्)

अथवाऽविशेषेणोपदेशः कर्तव्यः ॥

(भाष्यम्)

किं प्रयोजनम् ? ॥

(सिद्धान्तवार्तिकम्)

अविशेषेण संयोगोपधासंज्ञाऽलोऽन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः ॥

(भाष्यम्)

अविशेषेण संयोगसंज्ञा प्रयोजनम्-उऽ३ब्जकः "हलोऽनन्तराः संयोगः" इति संयोगसंज्ञा, "संयोगे गुर्विति" गुरुसंज्ञा, "गुरो"रिति प्लुतो भवति ॥

(प्रयोजनभाष्यम्)

उपधासंज्ञा च प्रयोजनम्-दुष्कृतं निष्कृतं दुष्पीतं निष्पीतं "इदुदुपधस्य चाप्रत्ययस्ये"ति षत्वं सिद्धं भवति ॥

(प्रयोजननिरासभाष्यम्)

नैतदस्ति प्रयोजनम् । न इदुदुपधग्रहणेन विसर्जनीयो विशेष्यते ॥

किं तर्हि ? ॥

सकारो विशेष्यते इदुदुपधस्य सकारस्य यो विसर्जनीय इति ॥

अथवोपधाग्रहणं न करिष्यते, इदुद्भ्यां तु परं

विसर्जनीयं विशेषयिष्यामः–इदुद्भ्यामुत्तरस्य विसर्जनीयस्येति ॥

(प्रयोजनभाष्यम्)

अलोऽन्त्यविधिश्च प्रयोजनम्–वृक्षस्तरति प्लक्षस्तरति "अलोऽन्त्यस्य" विधयो भवन्तीत्यलोऽन्त्यस्य सत्वं सिद्धं भवति ॥

(प्रयोजननिराकरणभाष्यम्)

एतदपि नास्ति प्रयोजनम्–"निर्दिश्यमानस्यादेशा भवन्ति" इति विसर्जनीयस्यैव भविष्यति ॥

(प्रयोजनभाष्यम्)

द्विर्वचनं प्रयोजनम्–उरᳲᳲकः उरᳲᳲपः । "अनचि च" अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धं भवति ॥

स्थानिवद्भावप्रतिषेधश्च प्रयोजनम्–यथेह भवति–उरःकेण, उरःपेण "अड्व्यवाय" इति णत्वम्, एवमिहापि स्थानिवद्भावात्प्राप्नोति–व्यूढोरस्केन महोरस्केनेति। तत्र "अनल्विधौ"–इति प्रतिषेधः सिद्धो भवति ॥

(इत्ययोगवाहोपदेशाधिकरणम्)

अयोगेति–अयोगवाहाः, न क्वचिदुपदिश्यन्ते लक्ष्ये च श्रूयन्ते, अतस्तेषामुपदेशः कर्तव्यः । ते च विसर्जनीयजिह्वामूलीयानुस्वारयमाः । न विद्यते योगो वर्णसमाम्नाये पाठो येषां तेऽयोगाः । वाहयन्ति प्रयोगं निर्वाहयन्तीति वाहाः । अयोगाश्च ते वाहाश्चेति विग्रहः । उरःकेणेत्यादौ णत्वार्थमट्सूपदेशः । अड्व्यवायेति–णत्वं सिद्धं भवति । शर्षु षत्वं जश्त्वं च प्रयोजनम् । अयमुब्जिरुपध्मानीयः पठ्यते । तस्य झलां जश् झशीति जश्त्वं–उब्जितेति यथा स्यात् । न च–उब्जिजिषतीत्यत्र–उपध्मानीयादेरेव द्विर्वचनं स्यात् । दकारो-

पधत्वे तु नन्द्रासंयोगादयः—इति निषेधः सिद्धो भवति । स्तोः श्चुना श्चुः । ततो भ उब्जेः । उब्जेश्चुना योगे भो भवतीति दकारस्य भकारे झलां जश् झशीति जश्त्वेन बकारे उब्जितेति रूपं सिद्धं भवति ।

यद्वा "भुजन्युब्जौ पाण्युपतापयोः" इति निपातनाद् दकारस्य बः । स चाकुत्वविषये । अभ्युद्ग इति कुत्वविषये न बकारः । षत्वं च शरिपाठस्य प्रयोजनम् । तेन सर्पिष्ष्वित्यत्र शर्व्यवाय इति षत्वं सिद्धम् । किं च नुम्विसर्जनीयसूत्रे विसर्जनीयग्रहणमपि न कर्तव्यं भवति । नुम्ग्रहणं तु नुम्स्थानिकानुस्वारग्रहणार्थमावश्यकम् । तेन पुंस्वित्यत्र षत्वं न । अथवा प्रयोजनविशेषमनपेक्ष्य यत्र प्रयोगे प्रयोजनसिद्धिस्तत्रोपदेशः कर्तव्यः । हल्युपदेशः कार्यः । तेनोब्जक इत्यत्र संयोगसंज्ञा गुरुसंज्ञा च प्लुतादिकार्यं सिद्ध्यति । अलिपाठात्—उपधासंज्ञायां दुष्कृतमित्यादौ—इदुदुपधस्येति—षत्वसिद्धिः । अकारोपरि शर्षु च पाठे सर्वेष्टसिद्धिः ।

(अथ वर्णार्थवत्ताधिकरणम्)

(भाष्यम्)

**किं पुनरिमे वर्णा अर्थवन्तः, आहोस्विदनर्थकाः ? ॥**

(अर्थवत्तासाधकप्रथमवार्तिकम्)

**अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् ॥**

(भाष्यम्)

**अर्थवन्तो वर्णाः ॥**

**कुतः ? ॥**

**धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् ॥**

**धातव एकवर्णा अर्थवन्तो दृश्यन्ते—एति, अध्येति, अधीत इति ॥**

प्रातिपदिकान्येकवर्णान्यर्थवन्ति—आभ्याम्, एभिः, एषु ॥

प्रत्यया एकवर्णा अर्थवन्तः, औपगवः, कापटवः ॥

निपाता एकवर्णा अर्थवन्तः, अ अपेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, अ अपक्राम । धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनान्मन्यामहे-अर्थवन्तो वर्णाः-इति ॥

( अर्थवत्तासाधकद्वितीयवार्तिकम् )

॥ वर्णव्यत्यये चार्थान्तरगमनात् ॥

( भाष्यम् )

वर्णव्यत्यये चार्थान्तरगमनान्मन्यामहेऽर्थवन्तो वर्णा इति । कूपः सूपो यूप इति । कूप इति सककारेण कश्चिदर्थो गम्यते । सूप इति ककारापाये सकारोपजने चार्थान्तरं गम्यते । यूप इति ककारसकारापाये यकारोपजने चार्थान्तरं गम्यते । ते मन्यामहे—यः कूपे कूपार्थः सककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति ॥

( अर्थवत्तासाधकतृतीयवार्तिकम् )

॥ वर्णानुपलब्धौ चानर्थगतेः ॥

( भाष्यम् )

वर्णानुपलब्धौ चानर्थगतेर्मन्यामहेऽर्थवन्तो वर्णा इति । वृक्षः ऋक्षः, काण्डीरः आण्डीरः । वृक्ष इति सवकारेण कश्चिदर्थो गम्यते, ऋक्ष इति वकारापाये सोऽर्थो न गम्यते । काण्डीर इति सककारेण कश्चिदर्थो गम्यते, आण्डीर इति ककारापाये सोऽर्थो न गम्यते ॥

( आक्षेपभाष्यम् )

किं तर्ह्युच्यते 'अनर्थगतेः' इति ?—न साधीयो ह्यत्रार्थस्य गतिर्भवति ॥

( समाधानभाष्यम् )

एवं तर्हीदं पठितव्यं स्यात्–"वर्णानुपलब्धौ चातदर्थगतेः" इति ॥

किमिदम्–अतदर्थगतेरिति ? ॥

तस्यार्थस्तदर्थः, तदर्थस्य गतिस्तदर्थगतिः, न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति ॥ अथवा सोऽर्थस्तदर्थस्तदर्थस्य गतिस्तदर्थगतिर्न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति ॥

( आक्षेपभाष्यम् )

स तर्हि तथा निर्देशः कर्तव्यः ? ॥

( सिद्धान्तभाष्यम् )

न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा–उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः खरमुखः । एवमतदर्थगतेरनर्थगतेरिति ॥

( अर्थवत्तासाधकचतुर्थवार्तिकम् )

॥ संघातार्थवत्त्वाच्च ॥

( भाष्यम् )

संघातार्थवत्त्वाच्च मन्यामहेऽर्थवन्तो वर्णा इति । येषां संघाता अर्थवन्तोऽवयवा अपि तेषामर्थवन्तः ॥ [ येषां पुनरवयवा अनर्थकाः समुदाया अपि तेषामनर्थकाः । ] तद्यथा एकश्चक्षुष्मान्दर्शने समर्थस्तत्समुदायश्च शतमपि समर्थम्, एकश्च तिलस्तैलदाने समर्थः तत्समुदायश्च खार्यपि तैलदाने समर्था ॥ येषां पुनरवयवा अनर्थकाः, समुदाया अपि तेषामनर्थकाः । तद्यथा–एकोऽन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमप्यसमर्थम्, एका च सिकता तैलदानेऽसमर्था तत्समुदायश्च खारीशतमप्यसमर्थम् ॥

( अर्थवत्तादूषणभाष्यम् )

यदि तर्हीमे वर्णा अर्थवन्तः । अर्थवत्कृतानि प्राप्नुवन्ति ॥

कानि ? ॥

"अर्थवत्प्रातिपदिकम्" इति प्रातिपदिकसंज्ञा, प्रातिपदिकाद्–इति स्वाद्युत्पत्तिः, सुबन्तं पदम्–इति पदसंज्ञा॥

तत्र को दोषः ? ॥

"पदस्य" इति नलोपादीनि प्राप्नुवन्ति धनं वनमिति ॥

( अर्थवत्तायां दोषनिराकरणवार्तिकम् )

॥ संघातस्यैकार्थ्यात्सुबभावो वर्णात् ॥

( भाष्यम् )

संघातस्यैकत्वमर्थः । तेन वर्णात्सुबुत्पत्तिर्न भविष्यति ॥

( अनर्थकतासाधकप्रथमवार्तिकम् )

॥ अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः ॥

( भाष्यम् )

अनर्थकास्तु वर्णाः ॥

कुतः ? ॥

प्रतिवर्णमर्थानुपलब्धेः । नहि प्रतिवर्णमर्था उपलभ्यन्ते ॥

किमिदं प्रतिवर्णमिति ? ॥

वर्णं वर्णं प्रति प्रतिवर्णम् ॥

( अनर्थकत्वसाधकद्वितीयवार्तिकम् )

॥ वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात् ॥

( भाष्यम् )

वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनान्मन्यामहे–अनर्थका वर्णा इति ॥ वर्णव्यत्यये–कृतेस्तर्कः, कसेः

सिकताः, हिंसेः सिंहः। वर्णव्यत्ययो–नार्थव्यत्ययः॥ अपायो लोपः–हतः, घ्नन्ति, घ्नन्तु, अघ्नन्। वर्णापायो नार्थापायः॥ उपजन आगमः–लविता लवितुम्। वर्णोपजनो नार्थोपजनः॥ विकार आदेशः। घातयति घातकः। वर्णविकारो नार्थविकारः॥ यथैव वर्णव्यत्ययापायोपजनविकारा भवन्ति, तद्वदर्थव्यत्ययापायोपजनविकारैर्भवितव्यम्। न चेह तद्वद्। अतो मन्यामहे–अनर्थका वर्णा इति॥

(तटस्थाक्षेपभाष्यम्)

उभयमिदं वर्णेषूक्तम्–अर्थवन्तोऽनर्थका इति च॥ किमत्र न्याय्यम्?॥

(समाधानभाष्यम्)

उभयमित्याह कुतः?

स्वभावतः। तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थै युज्यन्ते अपरे न। नचेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्, कश्चिद्वाऽनर्थक इति कृत्वा सर्वैरनर्थकैः। तत्र तत्र किमस्माभिः शक्यं कर्तुम्–यद्धातुप्रातिपदिकप्रत्ययनिपाता एकवर्णा अर्थवन्तोऽतोऽन्येऽनर्थका इति। स्वाभाविकमेतत्॥

(आक्षेपभाष्यम्)

कथं य एष भवता वर्णानामर्थवत्तायां हेतुरुपदिष्टः–अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः संघातार्थवत्त्वाच इति?॥

(समाधानभाष्यम्)

संघातान्तराण्येवैतान्येवंजातीयकानि अर्थान्तरेषु व-

र्तन्ते—कूपः सूपो यूप इति । यदि हि वर्णव्यत्ययकृतमर्थान्तरगमनं स्यात्, भूयिष्ठः कूपार्थः सूपे स्यात्, सूपार्थश्च कूपे यूपार्थश्च सूपे । यतस्तु खलु न किंचित्सूपस्य वा यूपे, यूपस्य वा कूपे, कूपस्य वा यूपे, सूपस्य वा कूपे कूपस्य वा सूपे, यूपस्य वा सूपे । अतो मन्यामहे—संघातान्तराण्येतान्येवंजातीयकान्यर्थान्तरेषु वर्तन्त इति । इदं खल्वपि—भवता वर्णानामर्थवत्तां ब्रुवता साधीयोऽनर्थकत्वं द्योतितम् । यो हि मन्यते—यः कूपे कूपार्थः सककारस्य, यः सूपे सूपार्थः ससकारस्य, यो यूपे यूपार्थः सयकारस्येति । ऊपशब्दस्त्वस्यानर्थकः स्यात् ॥

(आक्षेपभाष्यम्)

**तत्रेदमपरिहृतम्—संघातार्थवत्त्वाच्च इति ॥**

(समाधानभाष्यम्)

**एतस्यापि प्रातिपदिकसंज्ञायां परिहारं वक्ष्यति ॥**

इति वर्णानामर्थवत्ताधिकरणम् ॥

किं पुनरिमे वर्णा अर्थवन्त आहोस्विदनर्थका इति विप्रतिपत्तिः । द्वावप्यर्थावनुमानसिद्धौ । तद्यथा—अर्थवन्तो वर्णाः, एतीत्यादौ धातुषु, आभ्यामित्यादिप्रातिपदिकेषु, औपगव इत्यत्र—अणादिप्रत्ययेषु अ अ इत्यादि निपातेषु—एकवर्णेषु—चार्थबोधजनकत्वदर्शनात्—वर्णव्यत्यये चार्थान्तरगमनादर्थवन्तो वर्णा इत्यनुमीयते । तद्यथा—कूपः सूपः यूप इत्यादौ—ऊप इत्यस्य सत्त्वेऽपि तत्तद्वर्णव्यत्यये, अर्थान्तरप्रतीत्या, अन्वयव्यतिरेकाभ्यामादिवर्णानां कसयकाराणामेव स सोऽर्थ इति । वृक्ष इत्यादौ वकारसत्त्वे यदर्थप्रतीतिः, वकारासत्त्वे ऋक्ष इत्यादौ तदर्थाप्रतीतिरिति व्यतिरेकतो वकारादिवर्णस्यैव स सोऽर्थ इति गम्यते । अनर्थगतेरित्यत्रोष्ट्रमुखवत्तच्छब्दानुच्चारणम् । अथवा संघातार्थवत्त्वाच्च हेतोः—अर्थवन्तो वर्णा इति । येषां संघाता अर्थवन्तः, अवयवा अपि तेषामर्थवन्तः । न च वर्णानामर्थवत्त्वे

धनं वनमित्यादौ दोषः । एवं—वर्णा अनर्थकाः, प्रतिवर्णमर्थानुपलब्धेः । यदि प्रतिवर्णमर्थाः स्युस्तर्हि धनमित्यादौ बहूनामर्थानां प्रतीत्यापत्तिः । व्यत्ययापायोपजनविकारेष्वर्थदर्शनाच्चानर्थका वर्णाः । हत इत्यादौ वर्णापायो नार्थापायः, लविता वर्णोपजनो नार्थोपजनः, घातयति वर्णविकारो नार्थविकारः । उभयमिदं वर्णेषूक्तम् । अर्थवन्तोऽनर्थका इति च । तथाच न वर्णत्वावच्छेदेन—अर्थवत्त्वमनर्थवत्त्वं वा । किन्तु स्वभावतो यैरर्थो बुध्यते तेऽर्थवन्तः । यैर्न बुध्यते, तेऽनर्थकाः । वर्णरूपैर्धात्वादिभिश्चार्थो बुध्यते, तेऽर्थवन्तः । धनमित्यादौ प्रतिवर्णमर्थो न बुध्यते, तेऽनर्थकाः । किं च यदि वर्णव्यत्ययकृतमर्थान्तरं स्यात्तर्हि भूयिष्ठः कूपार्थः सूपे स्यादिति संक्षेपः ।

(अथ प्रत्याहारेष्वित्संज्ञकग्रहणाभावाधिकरणम्)

(भाष्यम्)

**अइउण् ऋऌक् एओङ् ऐऔच् ।**

(आक्षेपवार्तिकम्)

**॥ प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ॥**

(भाष्यम्)

**य एतेऽक्षु प्रत्याहारार्था अनुबन्धाः क्रियन्ते एतेषामज्ग्रहणेन ग्रहणं कस्मान्न भवति? ॥**

**किं च स्यात्? ॥**

**दधि णकारीयति, मधु णकारीयति, "इको यणचि" इति यणादेशः प्रसज्येत ॥**

(सिद्धान्तसमाधानवार्तिकम्)

**॥ आचारात् ॥**

(भाष्यम्)

**किमिदमाचारादिति? ॥**

आचार्याणामुपचारात् । नैतेष्वाचार्या अच्कार्याणि कृतवन्तः ॥

(सिद्धान्तसमाधानवार्तिकम्)

॥ अप्रधानत्त्वात् ॥

(भाष्यम्)

अप्रधानत्त्वाच्च । न खल्वप्येतेषामक्षु प्राधान्येनोपदेशः क्रियते ॥

क्व तर्हि ? ॥

हल्षु ॥

कुत एतत् ? ॥

एषा ह्याचार्यस्य शैली लक्ष्यते–यत्तुल्यजातीयास्तुल्यजातीयेषूपदिशति–अचोऽक्षु हलो हल्षु ॥

(सिद्धान्तसमाधानवार्तिकम्)

॥ लोपश्च बलवत्तरः ॥

(भाष्यम्)

लोपः खल्वपि तावद्भवति ॥

(सिद्धान्तसमाधानरीत्यन्तरवार्तिकम्)

ऊकालोऽजिति वा योगस्तत्कालानां यथा भवेत् ।
अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ॥

(भाष्यम्)

अथवा योगविभागः करिष्यते–"ऊकालोऽच्" उ ऊ उ३ इत्येवं कालोऽज्भवति । ततो "ह्रस्वदीर्घप्लुतः" ह्रस्वदीर्घप्लुतसंज्ञश्च भवति–ऊकालोऽच् ॥

(आक्षेपभाष्यम्)

एवमपि कुक्कुट इत्यत्रापि प्राप्नोति ॥

(समाधानभाष्यम्)

तस्मात्पूर्वोक्त एव परिहारः ॥

(भाष्यम्)

एष एवार्थः ॥ अपर आह—

ह्रस्वादीनां वचनात् प्राग्यावत्तावदेव योगोऽस्तु ।
अच्कार्याणि यथा स्युस्तत्कालेष्वक्षु कार्याणि ॥

(इति प्रत्याहारेष्वितां ग्रहणाभावाधिकरणम्)

(अणुदित्सूत्रेऽण्पदप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

अथ किमर्थमन्तस्थानामण्सूपदेशः क्रियते ? ॥

(समाधानभाष्यम्)

इह सयँ॒ यँ॒ यन्ता स वँ॒ वँ॒ वत्सरः य लँ॒ लँ॒ लोकं त लँ॒ लँ॒ लोकमिति। परसवर्णस्यासिद्धत्वादनुस्वारस्यैव द्विर्वचनम्। तत्र परस्य परसवर्णे कृते तस्य यय्ग्रहणेन ग्रहणाद् पूर्वस्यापि परसवर्णो यथा स्यात् ॥

(समाधानबाधकभाष्यम्)

नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत्—द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम् ॥ इति । यावता सिद्धत्वमुच्यते परसवर्ण एव तावद्भवति ॥

(समाधानसाधकभाष्यम्)

परसवर्णे तर्हि कृते तस्य यर्ग्रहणेन ग्रहणाद्द्विर्वचनं यथा स्यात् ॥

(समाधानबाधकभाष्यम्)

मा भूद् द्विर्वचनम् ॥

(समाधानसाधकभाष्यम्)

ननु च भेदो भवति—सति द्विर्वचने, त्रियकारकम्, असति द्विर्वचने द्वियकारकम् ॥

(समाधानबाधकभाष्यम्)

नास्ति भेदः सत्यपि द्विर्वचने द्वियकारकमेव ॥

कथम् ? ॥

"हलो यमां यमि लोपः" इत्येवमेकस्य लोपेन भवितव्यम् ॥

(समाधानसाधकभाष्यम्)

एवमपि भेदः । सति द्विर्वचने कदाचिद्द्वियकारकम्, कदाचित् त्रियकारकम् । असति द्वियकारकमेव ॥ स एष कथं भेदो न स्याद् ? ॥ यदि नित्यो लोपः स्यात् । विभाषा च स लोपः ॥

(समाधानबाधकैकदेशिभाष्यम्)

यथाऽभेदस्तथास्तु ॥

(समाधानसाधकसिद्धान्तिवार्तिकम्)

अनुवर्तते विभाषा, शरोऽचि यद्वारयति द्वित्वम् ॥

(भाष्यम्)

"यदयं शरोऽचि" इति द्विर्वचनप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्योऽनुवर्तते विभाषेति ॥

(जिज्ञासाभाष्यम्)

कथंकृत्वा ज्ञापकम् ? ॥

(तस्यैव हेतुसूचकमुत्तरार्द्धम्)

नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्यात् ॥

(भाष्यम्)

यदि नित्यो लोपः स्यात्, प्रतिषेधवचनमनर्थकं स्यात् । अस्त्वत्र द्विर्वचनम्, "झरो झरि सवर्णे" इति लोपो भविष्यति । पश्यति त्वाचार्यः–विभाषा स लोप इति ततो द्विर्वचनप्रतिषेधं शास्ति ॥

(समाधानबाधकभाष्यम्)

**नैतदस्ति ज्ञापकम् । नित्येऽपि तस्य लोपे स प्रतिषेधोऽवश्यं वक्तव्यः । यदेतद् "अचो रहाभ्याम्" इति द्विर्वचनं लोपापवादः स विज्ञायते ॥**

**कथम्? ॥**

**यर इत्युच्यते । एतावन्तश्च यरः । यद्दुत झरो वा यमो वा? । यदि चात्र लोपः स्याद्द्विर्वचनमनर्थकं स्यात् ॥**
**किं तर्हि तयोर्योगयोरुदाहरणम्? ॥**

**यद्कृते द्विर्वचने त्रिव्यञ्जनः संयोगः—प्रत्तम्, अवत्तम्, आदित्यः । इहेदानीं कर्त्ता हर्त्तेति द्विर्वचनसामर्थ्याल्लोपो न भवति । एवमिहापि लोपो न स्यात्कर्षति वर्षतीति । तस्मान्नित्येऽपि लोपेऽवश्यं स प्रतिषेधो वक्तव्यः ॥**

(उपसंहारभाष्यम्)

**तदेतदत्यन्तं संदिग्धं वर्तते—आचार्याणां विभाषानुवर्तते न वेति ॥**

अइउणिति—ननु—अच्प्रत्याहारे—एतद्घटकानुबन्धानां मध्यगत्वेन—अज्ग्रहणेन ग्रहणे, दधिणकारीयतीत्यादौ यणाद्यापत्तिरिति चेत् न । आचारात् । अनुनासिकेत्यादिनिर्देशाच्च । अप्रधानत्वान्नाम श्रुत्यघटकत्वान्न ग्रहणम् । एषामनुबन्धानामक्षु प्राधान्येन नोपदेशः । किन्तु श्रुतिघटकानामेव । यद्वा—आदिरन्त्येनेत्यनेन आदिसदृशानां बोधकानामेव ग्रहणौचित्यात् । एषा हि—आचार्यस्य शैली लक्ष्यते । यत्तुल्यजातीयास्तुल्यजातीयेषूपदिशति । अचोऽक्षु, हलो हल्ष्विति ।

यद्वा लोपश्च बलवत्तरः । अयं भावः । वर्णानामुपदेशस्तावदुपदेशोत्तरकालमित्संज्ञा । ततः परत्वान्नित्यत्वाच्च लोपः । तत आदिरन्त्येनेत्यनेनेति प्रत्याहारकाले, अनुबन्धानां लोपेन, असन्निधानादित्संज्ञा न प्रवर्तते । लोपस्तु बोधविषयत्वाभावरूपोऽत्र बोध्यः ।

अनुबन्धाः, प्रत्याहारजन्यबोधविषयत्वाभाववन्तः, लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात्–इत्यनुमानप्रयोगः ।

यद्वा ऊकालेति–अयं भावः । ऊकालोऽच् । उ ऊ उ३इत्येवं काल एवाच्भवति, नान्यः । आदिरन्त्येनेति सिद्धे, इदं नियमार्थम् । ततः ह्रस्वदीर्घप्लुतः । ऊकालोऽज्ह्रस्वदीर्घप्लुतसंज्ञको भवति, ह्रस्वादीनां वचनात्प्राग्यावदेव योगोऽस्तु । अच्कार्याणि यथा स्युस्तत्कालेष्वक्षु कार्याणि पूर्वोक्त एवार्थः । वार्तिककृता, अपर आहेत्यादिना उक्तः ।

अथ किमर्थमन्तस्थानामण्सूपदेशः क्रियते? इति चेच्छृणु । संयन्तेत्यत्र संयन्ता द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यमित्यनेन तस्य सिद्धत्वात्पूर्वमनुस्वारस्य परसवर्णे, अनुनासिकयकारे तस्य–अणत्वात् यर्ग्रहणेन ग्रहणाद्द्विर्वचनं यथा स्यात् ।

ननु मा भूद्द्विर्वचनं सत्यपि तस्मिन्, हलो यमामिति लोपेन द्वियकारकस्यैव सिद्धेरिति वाच्यम् । लोपस्य वैकल्पिकत्वेन तदभावे द्विर्वचनस्य सफलत्वात् । अत एव शरोऽचीति निषेधश्चरितार्थः ।

लोपस्य नित्यत्वे हि चतुर्ष्वित्यत्र द्वित्वेऽपि नित्यलोपेन तन्निवृत्तौ, निषेधवैयर्थ्यस्य सूपपादत्वात् । न चैतज्ज्ञापकमुक्तम् । अचो रहाभ्यामिति द्विर्वचनस्य लोपापवादत्वात् । चतुर्ष्वित्यत्र लोपो न स्यादिति द्वित्वस्याश्रवणार्थं निषेधस्य चारितार्थ्यात् । अत एव भाष्ये शरोऽचीत्यस्य ज्ञापकत्वाभावमुपवर्ण्य तदेतदत्यन्तं संदिग्धं वर्तते, आचार्याणां विभाषानुवर्तते न वेत्युक्तमिति ॥

(शिवसूत्रम्)

॥ लण् ॥

(व्याख्यानत इति परिभाषाधिकरणम्)

(आक्षेपभाष्यम्)

**अयं णकारो द्विरनुबध्यते पूर्वश्चैव परश्च । तत्राणग्रहणेष्विणग्रहणेषु च संदेहो भवति–पूर्वेण वा स्युः परेण वेति ।**

(प्रत्याक्षेपभाष्यम्)

कतमस्मिंस्तावदण्ग्रहणे संदेहः ? ॥

(प्रत्याक्षेपसमाधानभाष्यम्)

"ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति ॥

(सिद्धान्तिसमाधानवार्तिकम्)

॥ असंदिग्धम् ॥

(भाष्यम्)

असंदिग्धं पूर्वेण, न परेण ॥

(हेत्वाक्षेपभाष्यम्)

कुत एतत् ? ॥

(सिद्धान्त्येकदेशिहेतुवार्तिकम्)

॥ पराभावात् ॥

(भाष्यम्)

नहि ढ्रलोपे परेऽणः सन्ति ॥

(हेतुनिरासभाष्यम्)

ननु चायमस्ति—आतृढ आवृढ इति ? ।

(सिद्धान्तिसमाधानभाष्यम्)

एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादणग्रहणमनर्थकं स्यात् । "ढ्रलोपे पूर्वस्य दीर्घोऽचः" इत्येव ब्रूयात् अथवैतदपि न ब्रूयात् । अचो ह्येतद्भवति—ह्रस्वो दीर्घः प्लुत इति ॥

(आक्षेपभाष्यम्)

अस्मिंस्तर्ह्यण्ग्रहणे संदेहः—"केऽणः" इति ॥

(समाधानभाष्यम्)

असंदिग्धं पूर्वेण न परेण ॥

कुत एतत् ? ॥

पराभावात् ॥

नहि के परेऽणः सन्ति ॥

(हेतुनिरासभाष्यम्)

ननु चायमस्ति गोका नौकेति ॥

(सिद्धान्तिभाष्यम्)

एवं तर्हि सामर्थ्यात्पूर्वेण न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात् । "केऽचः" इत्येव ब्रूयात् । अथवैतदपि न ब्रूयात् । अचो ह्येतद्भवति–ह्रस्वो दीर्घः प्लुत इति ॥

(आक्षेपभाष्यम्)

अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः । "अणोऽप्रगृह्यस्यानुनासिकः" इति ॥

(समाधानभाष्यम्)

असंदिग्धं पूर्वेण न परेण ॥

कुत एतत्? ॥

पराभावात् ॥

नहि पदान्ताः परेऽणः सन्ति ॥

(हेतुनिरासभाष्यम्)

ननु चायमस्ति कर्तृ हर्तृ इति ॥

(सिद्धान्तिभाष्यम्)

एवं तर्हि सामर्थ्यात्पूर्वेण न परेण । यदि हि परेण स्यात्–अण्ग्रहणमनर्थकं स्यात् "अचोऽप्रगृह्यस्यानुनासिकः" इत्येव ब्रूयात् । अथ वैतदपि न ब्रूयात् अच एव हि प्रगृह्या भविष्यन्ति ॥

(आक्षेपभाष्यम्)

अस्मिंस्तर्ह्यण्ग्रहणे संदेहः "उरण्रपरः" इति ॥

(समाधानभाष्यम्)

असंदिग्धं पूर्वेण न परेण ॥

कुत एतत्? ॥

पराभावात् ॥

न ह्युःस्थाने परेऽणः सन्ति ॥

(हेतुनिरासभाष्यम्)

ननु चायमस्ति कर्त्रर्थं हर्त्रर्थमिति ।

(आपत्तिप्रश्नभाष्यम्)

किं च स्यात् यद्यत्र रपरत्वं स्यात्? ॥

(आपत्तिदर्शनभाष्यम्)

द्वयो रेफयोः श्रवणं प्रसज्येत ॥

(आपत्तिबाधकभाष्यम्)

"हलोयमां यमि लोपः" इत्येवमेकस्यात्र लोपो-भविष्यति ॥

(आपत्तिसाधकभाष्यम्)

विभाषा स लोपः, विभाषाश्रवणं प्रसज्येत ॥

(आपत्तिबाधकभाष्यम्)

अयं तर्हि नित्यो लोपः "रोरि" इति ॥

(आपत्तिसाधकभाष्यम्)

पदान्तस्येत्येवं सः ॥

(आपत्तिबाधकभाष्यम्)

न शक्यः स पदान्तस्येत्येवं विधातुम् । इह हि लोपो न स्यात्—जर्गृधेर्लङ् अजर्घाः, पास्पर्द्धेः अपास्पाः इति ॥

(आपत्तिसाधकभाष्यम्)

इह तर्हि मातॄणां पितॄणामिति रपरत्वं प्रसज्येत ॥

(आपत्तिबाधकभाष्यम्)

आचार्यप्रवृत्तिर्ज्ञापयति—नात्र रपरत्वं भवतीति । यदयम्—"ऋत इद्धातोः" इति धातुग्रहणं करोति ॥

कथं कृत्वा ज्ञापकम् ? ॥

धातुग्रहणस्यैतत्प्रयोजनम्, इह मा भूत्—मातॄणां पितॄणामिति । यदि चात्र रपरत्वं स्याद्धातुग्रहणमनर्थकं स्यात् । रपरत्वे कृतेऽनन्त्यत्वादित्वं न भविष्यति । पश्यति त्वाचार्यो—नात्र रपरत्वं भविष्यतीति । ततो धातुग्रहणं करोति ॥

(आपत्तिसाधकभाष्यम्)

इहापि तर्हि न प्राप्नोति—चिकीर्षति जिहीर्षतीति ॥

(आपत्तिबाधकभाष्यम्)

मा भूदेवम् । "उपधायाश्च" इत्येवं भविष्यति ॥

(आपत्तिसाधकभाष्यम्)

इहापि तर्हि प्राप्नोति—मातॄणां पितॄणामिति । तस्मात्तत्र धातुग्रहणं कर्तव्यम् ॥

(सिद्धान्तिसाधनभाष्यम्)

एवं तर्हि सामर्थ्यात्पूर्वेण न परेण । यदि परेण स्याद्—अणग्रहणमनर्थकं स्यात्—"उरऌपरः" इत्येव ब्रूयात् ॥

(आक्षेपभाष्यम्)

अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः—"अणुदित्सवर्णस्य चाप्रत्ययः" इति ।

(समाधानभाष्यम्)

असंदिग्धं परेण, न पूर्वेण ॥

(हेत्वाक्षेपभाष्यम्)

कुत एतत् ? ॥

(सिद्धान्तवार्तिकम्)

॥ सवर्णेऽण् तपरं ह्युऋत् ॥

(भाष्यम्)

यदयम् "उऋत्" इत्यृकारे तपरकरणं करोति, तज्ज्ञापयत्याचार्यः–परेण न पूर्वेणेति ॥

(आक्षेपभाष्यम्)

इण्ग्रहणेषु तर्हि संदेहः ॥

(समाधानभाष्यम्)

असन्दिग्धं परेण, न पूर्वेण ॥

(हेतुजिज्ञासाभाष्यम्)

कुत एतत् ? ॥

(सिद्धान्तहेतुवार्तिकम्)

॥ य्वोरन्यत्र परेणेण् स्यात् ॥

(भाष्यम्)

यत्रेच्छति पूर्वेण संमूद्य ग्रहणं तत्र करोति–य्वोरिति । तच्च गुरु भवति ॥

कथं कृत्वा ज्ञापकम् ? ॥

तत्र विभक्तिनिर्देशे संमूद्य ग्रहणे चार्धचतस्रो मात्राः, प्रत्याहारग्रहणे पुनस्तिस्रो मात्राः । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः–परेण न पूर्वेणेति ॥

(आक्षेपभाष्यम्)

किं पुनर्वर्णोत्सत्ताविवायं णकारो द्विरनुबध्यते ? ॥

(समाधानवार्तिकम्)

॥ व्याख्यानाच्च द्विरुक्तितः ॥

(भाष्यम्)

एतज्ज्ञापयत्याचार्यो–भवत्येषा परिभाषा–"व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति ।

**"अणुदित्सवर्णस्य" इत्येतत्परिहाय पूर्वेणाणग्रहणम्, "परेणेणग्रहणम्" इति व्याख्यास्यामः ॥**

लणिति—चतुर्दशसूत्र्यां णकारो द्विरनुबध्यते, पूर्वश्चैव परश्च । तत्राणग्रहणेष्विति सन्देहो भवति—पूर्वेण णकारेण प्रत्याहारः, परणकारेण वेति । तद्यथा—ढ्रलोपसूत्रे, अणित्यत्र सन्देहः, परमसंदिग्धं पूर्वेण, न परेण कुत एतत्—पराभावात् । न हि ढ्रलोपे परेऽणः सन्ति । ननु चायमस्ति—आतृढ इति । एवं तर्हि अणग्रहणसामर्थ्यात्पूर्वेण, न परेण । अचश्चेति परिभाषया—अच एव दीर्घसिद्धेः । एवमेव केण इत्यत्र ह्रस्वपदश्रुत्या—अच एव ह्रस्वसिद्धौ—अणग्रहणसामर्थ्यात्पूर्वेणैव प्रत्याहारो न परेण । अणोऽप्रगृह्यस्येत्यत्र अप्रगृह्यस्येति पर्युदासेन—अच एव कार्यसिद्धौ—अणग्रहणसामर्थ्यात्पूर्वेण प्रत्याहारः । उरण् रपर इत्यत्रापि सामर्थ्यादेव पूर्वेण न परेण । अन्यथा उरज्रपर इत्येव ब्रूयात् । अणुदित्सूत्रे परेणैव प्रत्याहार इत्यत्र—उर ऋत्—इति तपरकरणं ज्ञापकम् । यद्यणपूर्वेण स्यात्तर्हि, ऋकारस्यानणत्वेन सवर्णग्रहणाप्राप्तेस्तपरकरणं व्यर्थमेव स्यात् । इणपि परेणैव । अचि श्नुधातु (?) इति सूत्रे य्वोर्ग्रहणसामर्थ्यात् । अन्यथा इणित्येव ब्रूयात् । य्वोरित्यत्र विभक्तिनिर्देशे संमृज्य ग्रहणे, अर्धाचतिस्रो मात्राः, प्रत्याहारग्रहणे तिस्रो मात्रा इति—अर्धमात्रा लाघवस्य सत्त्वात् । लण् सूत्रस्थणकार एव व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति परिभाषां ज्ञापयति ।

( शिवसूत्रे )

**ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥**

( आक्षेपभाष्यम् )

**किमर्थमिमौ मुखनासिकावचनावुभावनुबध्येते, न ञकार एवानुबध्येत ? ॥**

( प्रत्याक्षेपभाष्यम् )

**कथम्—यानि मकारेण ग्रहणानि ? ॥**

(प्रत्याक्षेपसमाधानभाष्यम्)

[सन्तु ञकारेण]

(आक्षेपभाष्यम्)

[कथम्]

"हलो यमां यमि लोपः" इति ॥

(इष्टापत्तिबाधकभाष्यम्)

नैवं शक्यम्। झकारभकारपरयोरपि झकारभकारयोर्लोपः प्रसज्येत ॥

(इष्टापत्तिसाधकभाष्यम्)

न झकारभकारौ झकारभकारयोः स्तः ॥

(आक्षेपभाष्यम्)

कथम्–पुमः खय्यमपरे इति? ॥

(इष्टापत्तिभाष्यम्)

एतदप्यस्तु ञकारेण "पुमः खय्यञपरे" इति ॥

(इष्टापत्तिबाधकभाष्यम्)

नैवं शक्यम्। झकारभकारपरेऽपि हि खयि रुः प्रसज्येत ॥

(इष्टापत्तिसाधकभाष्यम्)

न झकारभकारपरः खयस्ति ॥

(आक्षेपभाष्यम्)

कथम्–"ङमो ह्रस्वादचि ङमुण्नित्यम्" इति? ॥

(इष्टापत्तिभाष्यम्)

एतदप्यस्तु ञकारेण "ङञो ह्रस्वादचि ङञुण्नित्यम्" इति ॥

(इष्टापत्तिबाधकभाष्यम्)

नैवं शक्यम्। झकारभकारयोरपि हि पदान्तयोर्झकारभकारावागमौ स्याताम् ॥

(इष्टापत्तिसाधकभाष्यम्)

न झकारभकारौ पदान्तौ स्तः ॥

( इष्टापत्तिबाधकैकदेशिभाष्यम् )

**एवमपि पञ्चा यमाश्रय आगमिनो वैषम्यात्संख्याता-नुदेशो न प्राप्नोति ॥**

( इष्टापत्तिसाधकैकदेशिभाष्यम् )

**सन्तु तावद्येषामागमानामागमिनः सन्ति । झकार-भकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यतः ॥**

ञमङणनम् झभञिति—अत्र मकारोऽनुबन्धो माऽस्तु । सर्वत्र ञकारेणैव प्रत्याहारोऽस्तु । हलो यञां यञि लोप इति । पुंमः खञि मपरे, ङञो ह्रस्वादचि ङञुण् नित्यम् । न च ञकारेण प्रत्याहारे झकारभकारग्रहणापत्तिरिति वाच्यम् । लक्ष्ये झकारभकारयोर्दोष-प्रयोजकयोरभावेन फलभेदाभावान्मकारप्रत्याख्यानं भाष्यसंमतम् ॥

( अक्षरशब्दनिर्वचनम् )

( आक्षेपभाष्यम् )

**अथ किमिदमक्षरमिति ? ॥**

( सिद्धान्तसमाधानवार्तिकम् )

**॥ अक्षरं न क्षरं विद्यात् ॥**

( भाष्यम् )

**न क्षियते न क्षरतीति वाऽक्षरम् ॥**

( सिद्धान्तसमाधानवार्तिकम् )

**॥ अश्नोतेर्वा सरोऽक्षरम् ॥**

( भाष्यम् )

**अश्नोतेर्वा पुनरयमौणादिकः सरन् प्रत्ययः । अश्नुते इत्यक्षरम् ॥**

( सिद्धान्तसमाधानवार्तिकम् )

**॥ वर्णं वाहुः पूर्वसूत्रे ॥**

( भाष्यम् )

**अथवा पूर्वसूत्रे वर्णस्याक्षरमिति संज्ञा क्रियते ॥**

अक्षरमिति–क्षियः क्षरतेर्वा विनाशार्थकस्य नञ्पूर्वस्य रूपम् । तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम् । व्यवहारनित्यतया वर्णादिस्फोट-वाचकम् । यद्वा–अश्नोतेर्वा पुनरयमौणादिकः सरन्प्रत्ययः । अश्नुते-रित्यक्षरम् । पदं वाक्यं वा व्याप्नोतीत्यर्थः । पूर्वाचार्याणां ग्रन्थे वर्णस्याक्षरसंज्ञा क्रियते ।

(अथाक्षरसमाम्नायोपदेशप्रयोजनम्)

(प्रश्नवार्तिकम्)

**किमर्थमुपदिश्यते ? ॥**

(भाष्यम्)

**अथ किमर्थमुपदेशः क्रियते ? ॥**

(समाधानवार्तिकम्)

**॥ वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते ॥**
**॥ तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते ॥**

(भाष्यम्)

**सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चंद्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते ॥**

अथ किमर्थेति—

वर्णोपदेशस्य किं प्रयोजनमिति चेच्छृणु । वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते । वर्णा येन शास्त्रेण ज्ञायन्ते तद्वाचो विषयः । शास्त्रेण वाग्विषयीयते, आबध्यते शास्त्रेण तस्याः परिज्ञानादित्यर्थः । ब्रह्म, वेदः यत्र पदे वर्तते । एवं वर्णसाधुत्वज्ञानमप्युपदेशफलं, लाघवञ्चेति बोध्यमिति शम् ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये अर्थसंग्रहटीकासहिते द्वितीयमाह्निकं समाप्तम् ॥ शिवम् ॥



अथ नंदिकेशकृतचतुर्दशशिवसूत्रव्याख्याकाशिकाप्रारंभः ॥

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥ १ ॥
अत्र सर्वत्र सूत्रेषु अन्त्यवर्णचतुर्दशम् ।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥ २ ॥

अइउण् ॥ १ ॥

अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु ।
चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः ॥ ३ ॥
अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।
आद्यमन्त्येन संयोगादहमित्येव जायते ॥ ४ ॥
सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत् ।
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः स्मृता ॥ ५ ॥
वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः ।
सृष्ट्याविर्भावमासाद्य मध्यमा वाक् समा मता ॥ ६ ॥
अकारं संनिधीकृत्य जगतां कारणत्वतः ।
इकारः सर्ववर्णानां शक्तित्वात्कारणं मतम् ॥ ७ ॥
जगत्स्रष्टुमभूदिच्छा यदा ह्यासीत्तदाभवत् ।
कामबीजमिति प्राहुर्मुनयो वेदपारगाः ॥ ८ ॥
अकारो ज्ञप्तिमात्रं स्यादिकारश्चित्कला मता ।
उकारो विष्णुरित्याहुर्व्यापकत्वान्महेश्वरः ॥ ९ ॥

ऋऌक् ॥ २ ॥

ऋऌक् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत् ।
तामेव वृत्तिमाश्रित्य जगद्रूपमजीजनत् ॥ १० ॥
वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते ।
चन्द्रचन्द्रिकयोर्यद्वद्यथा वागर्थयोरपि ॥ ११ ॥

स्वेच्छया स्वस्य चिच्छक्तौ विश्वमुन्मीलयत्यसौ ।
वर्णानां मध्यमं क्लीबमृऌवर्णद्वयं विदुः ॥ १२ ॥

एओङ् ॥ ३ ॥

एओङ् मायेश्वरात्म्यैक्यविज्ञानं सर्ववस्तुषु ।
साक्षित्वात्सर्वभूतानां स एक इति निश्चितम् ॥ १३ ॥

ऐऔच् ॥ ४ ॥

ऐऔच् ब्रह्मस्वरूपः सन् जगत्स्वान्तर्गतं ततः ।
इच्छया विस्तरं कर्तुमाविरासीन्महामुनिः ॥ १४ ॥

हयवरट् ॥ ५ ॥

भूतपञ्चकमेतस्माद्धयवरण्महेश्वरात् ।
व्योमवाय्वम्बुवन्ह्याख्यभूतान्यासीत्स एव हि ॥ १५ ॥
हकाराद्व्योमसंज्ञं च यकाराद्वायुरुच्यते ।
रकाराद्वह्निस्तोयं तु वकारादिति सैव वाक् ॥ १६ ॥

लण् ॥ ६ ॥

आधारभूतं भूतानामन्नादीनां च कारणम् ।
अन्नाद्रेतस्ततो जीवः कारणत्वाल्लणीरितम् ॥ १७ ॥

ञमङणनम् ॥ ७ ॥

शब्दस्पर्शौ रूपरसगन्धाश्च ञमङणनम् ।
व्योमादीनां गुणा ह्येते जानीयात्सर्ववस्तुषु ॥ १८ ॥

झभञ् ॥ ८ ॥

वाक्पाणी च झभञासीद्विराड्रूपचिदात्मनः ।
सर्वजन्तुषु विज्ञेयं स्थावरादौ न विद्यते ॥
वर्गाणां तुर्यवर्णा ये कर्मेन्द्रियमया हि ते ॥ १९ ॥

घढधष् ॥ ९ ॥

घढधष् सर्वभूतानां पादपायू उपस्थकः ।
कर्मेन्द्रियगणा ह्येते जाता हि परमार्थतः ॥ २० ॥

जबगडदश् ॥ १० ॥

श्रोत्रत्वङ्नयनघ्राणजिह्वाधीन्द्रियपञ्चकम् ।
सर्वेषामपि जन्तूनामीरितं जबगडदश् ॥ २१ ॥

खफछठथचटतव् ॥ ११ ॥

प्राणादिपञ्चकं चैव मनोबुद्धिरहंकृतिः ।
बभूव कारणत्वेन खफछठथचटतव् ॥ २२ ॥
वर्गद्वितीयवर्णोत्थाः प्राणाद्याः पञ्च वायवः ।
मध्यवर्गत्रयाज्जाता अन्तःकरणवृत्तयः ॥ २३ ॥

कपय् ॥ १२ ॥

प्रकृतिं पुरुषं चैव सर्वेषामपि सम्मतम् ।
सम्भूतमिति विज्ञेयं कपय् स्यादिति निश्चितम् ॥ २४ ॥

शषसर् ॥ १३ ॥

सत्त्वं रजस्तम इति गुणानां त्रितयं पुरा ।
समाश्रित्य महादेवः शषसर् क्रीडति प्रभुः ॥ २५ ॥
शकाराद्रजसोद्भूतिः षकारात्तामसोद्भवः ।
सकारात्सत्त्वसम्भूतिरिति त्रिगुणसम्भवः ॥ २६ ॥

हल् ॥ १४ ॥

तत्त्वातीतः परः साक्षी सर्वानुग्रहविग्रहः ।
अहमात्मा परो हल् स्यामिति शम्भुस्तिरोदधे ॥ २७ ॥

इति नंदिकेश्वरकृता( शिवचतुर्दशसूत्रव्याख्या )
काशिका समाप्ता ॥

॥ श्रीः ॥

श्रीयुज्जोशीत्युपनामकगोपालशर्मशास्त्रिणो वाराणस्यां समधिगतव्याकरणन्याय-मीमांसादिशास्त्रव्युत्पन्ना यदृच्छयाऽत्र समागता । एषां च वाग्मितया व्युत्पादन-सरण्या शेखरमहाभाष्यटीकाप्रबन्धरचनशैल्या च सुप्रसन्नमनस्कैः पाण्डित्यकार्यनिर्वाहक-योग्यता निश्चिन्वानैर्विशदीक्रियते । यदेते गुणग्राहिभि कोविदप्रवरैर्भृशं माननीया इति ।

लष्कर, लष्कर राजकीयप्रधानपाठशालाध्यापक

३।४।१९१४ **महामहोपाध्याय रघुपतिशास्त्रिभिः**

पुणे, ३०।९।४०

पण्डित गोपाळशास्त्री जोशी यांनी महाभाष्यान्त व्याकरणशास्त्राचे अध्ययन व अध्यापन केले असून त्यानी महाभाष्यावर संस्कृत भाषेमध्यें सुबोध टीका लिहिली आहे या टीकेचे योगानें महाभाष्यासारखा अत्यन्त कठीण ग्रंथ व्याकरणशास्त्राचें साधारण ज्ञान असणारास सुद्धा सुलभ होईल याविषयीं मुळीच शंका नाही. गेल्या शतकात महाराष्ट्रामध्यें व्याकरणशास्त्राच्या अध्ययनाध्यापनाची परंपरा हळुहळु सुटत चाललेली दिसते, त्या परंपरेचें उज्जीवन पण्डित गोपाळशास्त्री जोशी या सुबोध टीकेच्या रूपाने करीत आहेत, तरी सदर ग्रंथास सर्वांकडून उदार आश्रय देण्यांत यावा अशी प्रार्थना आहे.

**परशुराम लक्ष्मण वैद्य,** एम्. ए., पी. एच्. डी.,

संस्कृत भाषाध्यापक, वाडिया कॉलेज, पुणे.

# नियमावलिः

१–४ आह्निकानामग्रिममूल्यं पञ्चरूप्यकाणि

| | | | |
|---|---|---|---|
| १ | प्रथमाह्निकस्य मूल्यम् ... ... . | रु | १। |
| | पञ्चविंशतिरूप्यकैराश्रयदातारो भविष्यन्ति ... . | रु | २५ |

---

| | | | |
|---|---|---|---|
| १–४ | अर्थसंग्रहटीकासहितपातञ्जलमहाभाष्य | कि आगाऊ रु | ५ |
| | | मागाहून रु | ६ |
| | प्रथमाह्निक . . . ... ... | कि रु | १। |
| | आश्रयदाते ... ... ... .. | रु | २५ |

पं. गोपाळशास्त्री जोशी.

Printed by Ramchandra Yesu Shedge, at the Nirnaya Sagar Press, 26-28, Kolbhat Street, Bombay 2.

Published by Pandit Gopalshastri Joshi, Shri Krishna Sanskrit Vidyalaya, Girgaum, Bombay 4

# PĀTAÑJALA VYĀKARANA MAHĀBHĀṢYA

**With a new Commentary**

BY

# PANDIT G. S. JOSHI

# PART III & IV

---

श्रीः

श्रीमत्पतञ्जलिविरचितम्

# पातञ्जलव्याकरणमहाभाष्यम्

( तृतीय-चतुर्थ-भागौ )

स्वरचितार्थसंग्रहटीकासहितम्

पं. गोपालशास्त्रिणा रचितम्

शके १८६७ ] *Price Rs 3-0-0* [ सन १९४५

॥ श्रीः ॥

# अर्पण-पत्रिका



हा ग्रथ श्रीमंत भवानराव उर्फ बाळासाहेब पंत प्रतिनिधी राजेसाहेब संस्थान औंध याचे प्रोत्साहनाने प्रकाशित झाला असून श्रीमंताचे औदार्य, गुण-ग्राहकता व धार्मिकता इत्यादि श्रेष्ठगुणांमुळे त्यांना सादर समर्पण केला असे.

ग्रथकर्ता

**पं. गोपाळशास्त्री जोशी**

# अनुक्रमाणिका

---

॥ पूर्वसंकल्पितग्रन्थः समाप्तस्तु यदृच्छया ॥

॥ लोकाश्रयश्चेदग्रेऽपि भविष्यत्येव मङ्गलम् ॥

॥ श्रीः ॥

# ॥ अथ तृतीयाह्निकप्रारम्भः ॥

( वृद्धिसंज्ञासूत्रम् )

वृद्धिरादैच् ( १।१।१ ) ॥

( आक्षेपभाष्यम् )

कुत्वं कस्मान्न भवति " चोः कुः पदस्य " इति ? ॥

( समाधानभाष्यम् )

भत्वात् ॥

( आक्षेपभाष्यम् )

कथं भसंज्ञा ? ॥

( समाधानभाष्यम् )

" अयस्मयादीनि च्छन्दसि " इति ॥

( समाधानबाधकभाष्यम् )

छन्दसीत्युच्यते न चेदं छन्दः ॥

( समाधानसाधकभाष्यम् )

छन्दोवत्सूत्राणि भवन्ति ॥

( आक्षेपभाष्यम् )

यदि भसंज्ञा, "वृद्धिरादैजदेङ्गुण" इति जश्त्वमपि न प्राप्नोति ॥

( समाधानभाष्यम् )

उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते । तद्यथा 'ससुष्टुभास ऋक्वता गणेन' पदत्वात्कुत्वम् । भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वाज्जश्त्वम्, भत्वात्कुत्वं न भविष्यति ॥

( इत्यसाधुत्वनिराकरणम् )

( अथतद्भावितपक्षनिराकरणाधिकरणम् )

( उभयपक्षस्वरूप-तद्भावितपक्षदूषणभाष्यम् )

किं पुनरिदं तद्भावितग्रहणम्-वृद्धिरित्येवं ये-आकारैकारौकारा भाव्यन्ते, तेषां ग्रहणम्, आहोस्विदादैज्मात्रस्य ? ॥

किं चातः ? ॥

यदि तद्भावितग्रहणम्, शालीयो मालीय इति वृद्धलक्षणश्छो न प्राप्नोति। आम्रमयम्, शालमयम्, वृद्धिलक्षणो मयण्न प्राप्नोति । आम्रगुप्तायनिः शालगुप्तायनिः, वृद्धलक्षणः फिञ् न प्राप्नोति ॥

( आदैज्मात्रग्रहणे दूषणभाष्यम् )

अथादैज्मात्रस्य ग्रहणम्, सर्वोभासः सर्वभासः इति "उत्तरपदवृद्धौ सर्वं च" इत्येष विधिः प्राप्नोति ॥ इह च तावती भार्या यस्य तावद्भार्यः यावद्भार्यः "वृद्धिनिमित्तस्य" इति पुंवद्भावप्रतिषेधः प्राप्नोति ॥

( सिद्धान्तभाष्यम् )

अस्तु तर्हि-आदैज्मात्रस्य ग्रहणम् ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्-सर्वो भासः सर्वभास इति "उत्तरपदवृद्धौ सर्वं च" इत्येष विधिः प्राप्नोतीति ॥

( समाधानभाष्यम् )

नैष दोषः । नैवं विज्ञायते उत्तरपदस्य वृद्धिरुत्तरपदवृद्धिरुत्तरपदवृद्धाविति ॥ कथं तर्हि ? ॥

"उत्तरपदस्य" इत्येवं प्रकृत्य या वृद्धिस्तद्वदुत्तरपदे, इत्येवमेतद्विज्ञायते ॥ अवश्यं चैतदेवं विज्ञेयम् । तद्भावितग्रहणे सत्यपीह प्रसज्येत-सर्वः कारकः सर्वकारक इति ॥

वृद्धिरादैजिति-सूत्राणां छन्दस्त्वादयस्मयादीनीत्यादिना भत्वात्कुत्वाभावः । पदत्वाद्वृद्धिरादैजदेङ्गुण इति संहितापाठे जश्त्वं च । ऋक्तेत्यत्र पदत्वात्कुत्वं भत्वाज्जश्त्वाभाव इति वत् । अत्र वृद्धि शब्देन विहितानामादैचामेव ग्रहणमिति शालीय इत्यत्र वृद्धाच्छः, आम्रमयमित्यत्र "नित्यं वृद्ध" इति मयट् च न स्याताम् । किन्तु, आदैच्मात्रस्य । न च सर्वभास इत्यत्र, उत्तरपदवृद्धौ सर्वञ्चेत्येतत् तावद्भार्य इत्यत्र, वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधश्च स्यादिति वाच्यम् । उत्तरपदस्येत्येवं प्रकृत्य या वृद्धिस्तद्धत्युत्तरपद एव-उत्तर पदवृद्धावित्यस्य प्रवृत्तेः । अत एव सर्वकारक इत्यत्र नैतत्प्रवृत्तिः ॥

( द्वितीयदूषणनिराकरणभाष्यम् )

यदप्युच्यते-इह तावती भार्या यस्य तावद्भार्यः यावद्भार्य इति च "वृद्धिनिमित्तस्य"-इति पुंवद्भावप्रतिषेधः प्राप्नोतीति ॥ नैषदोषः । नैवं विज्ञायते-वृद्धेर्निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तस्येति ॥

कथं तर्हि ? ॥

वृद्धेर्निमित्तं यस्मिन्सोयं वृद्धिनिमित्तः वृद्धिनिमित्तस्येति ।

किं च वृद्धेर्निमित्तम् ? ॥

योऽसौ ककारो ञकारो णकारो वा ॥ अथवा यः कृत्स्नाया वृद्धेर्निमित्तम् ॥

कश्च कृत्स्नाया वृद्धेर्निमित्तम् ?

यस्त्रयाणामाकारैकारौकाराणाम् ॥

कथम् ? ॥

'यथालोके' लोके ह्यर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते । अर्थवन्ति तावत्-देवदत्त, गामभ्याज शुक्लां दण्डेन' 'देवदत्त गामभ्याज कृष्णाम्' इति । अनर्थकानि-'दश दाडिमानि षडपूपाः कुण्डमजाजिनं पलल-

पिण्डः अधरोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीनः' इति ॥

( इतितज्ञावितपक्षनिराकरणम् )

यद्वा वृद्धिनिमित्तस्येत्यत्र वृद्धिनिमित्तभूत-कञणवति प्रत्यये, एवैतत्प्रवृत्तेःकृत्स्नवृद्धिनिमित्तविधानेन -आकारमात्रवृद्धिनिमित्तवत्यपि तत्प्रवृत्तिरिति न दोषः ।

( अथसंज्ञासूत्रत्वसाधनाधिकरणम् )

( आक्षेपवार्तिकम् )

॥ संज्ञाधिकारः संज्ञासंप्रत्ययार्थः ॥

( भाष्यम् )

" अथ संज्ञा " इत्येवं प्रकृत्य वृद्ध्यादयः शब्दाः पठितव्याः ॥

किं प्रयोजनम् ? ॥

संज्ञासंप्रत्ययार्थः । वृद्ध्यादीनां शब्दानां संज्ञा इत्येष संप्रत्ययो यथा स्यात् ॥

( आक्षेपसाधकवार्तिकम् )

॥ इतरथा ह्यसंप्रत्ययो यथा लोके ॥

( भाष्यम् )

अक्रियमाणे हि संज्ञाधिकारे वृद्ध्यादीनां संज्ञेत्येष संप्रत्ययो न स्यात् ॥

इदमिदानीं बहुसूत्रमनर्थकं स्यात् ॥

अनर्थकमित्याह ॥

ननु-अथ संज्ञेत्येवं प्रकृत्य वृद्ध्यादयः शब्दाः पाठ्याः । तेन संज्ञासूत्रत्वनिर्णयः स्यात् ।

( आक्षेपान्तरवार्तिकम् )

॥ संज्ञासंज्ञ्यसंदेहश्च ॥

( भाष्यम् )

क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्यः॥ कुतो ह्येतत्–वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति । न पुनरादैचः संज्ञा, वृद्धिशब्दः संज्ञीति ? ॥

( आक्षेपनिराकरणभाष्यम् )

यत्तावदुच्यते–'संज्ञाधिकारः कर्तव्यः संज्ञासंप्रत्ययार्थः' इति ॥ न कर्तव्यः ।

( सिद्धान्तवार्तिकप्रथमखण्डम् )

॥ आचार्याचारात्संज्ञासिद्धिः ॥

( भाष्यम् )

आचार्याचारात्संज्ञासिद्धिर्भविष्यति ॥

किमिदम्—आचार्याचारादिति ? ॥

आचार्याणामुपचारात् ।

( सिद्धान्तवार्तिकम् )

॥ यथा लौकिकवैदिकेषु ॥

( भाष्यम् )

तद्यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ॥ लोके तावन्मातापितरौ पुत्रस्य जातस्य संवृतेऽवकाशे नाम कुर्वाते–देवदत्तो यज्ञदत्त इति । तयोरुपचारादन्येऽपि जानन्ति–इयमस्य संज्ञेति ॥ वेदे याज्ञिकाः संज्ञां कुर्वन्ति–स्फयो यूपश्चषाल इति । तत्रभवतामुपचारादन्येऽपि जानन्ति—इयमस्य संज्ञेति ॥

( दार्ष्टान्तिकभाष्यम् )

एवमिहापि–इहैव तावत्केचिद्व्याचक्षाणा आहुः–वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति ॥ अपरे पुनः "सिचि-वृद्धिः" इत्युक्त्वाऽऽआकारैकारौकारानुदाहरन्ति । तेन-मन्यामहे–यया प्रत्याय्यन्ते सा संज्ञा, ये प्रतीयन्ते ते संज्ञिन इति ॥

( आक्षेपान्तरानुवादभाष्यम् )

**यदप्युच्यते–क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्य इति ॥**

( सिद्धान्तवार्तिकम् )

**॥ संज्ञासंज्ञ्यसंदेहश्च ॥**

( भाष्यम् )

**संज्ञासंज्ञिनोश्चासंदेहः सिद्धः ॥**

**कुतः ? ॥**

**आचार्याचारादेव । उक्त आचार्याचारः ॥**

किं च वृद्धिशब्द एव संज्ञा, नादैजिति निश्चयार्थमपि यत्नः कार्य इति चेत् । न । पित्रादीनां पुत्रादिषु देवदत्त इति व्यवहारादन्येषामपि देवदत्त इति संज्ञावगमः । एवं वेदेऽपि स्फ्य इत्यादिशब्दे याज्ञिकादीनां व्यवहारात्स्फ्य इत्यादिसंज्ञा । एवमाचार्याणां वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति व्याख्यानात् " सिचिवृद्धिः " इत्युक्त्वा–आकारादिघटितलक्ष्याणामुदाहरणाच्च वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इत्यवगमेन शंकाद्वयनिवृत्तेः सुलभत्वात् ।

( सिद्धान्तहेतुवार्तिकम् )

**॥ अनाकृतिः ॥**

( भाष्यम् )

**अथवाऽनाकृतिःसंज्ञा, आकृतिमन्त संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥**

किं चाकृतिमत एव मांसपिण्डस्य संज्ञित्वं देवदत्त इत्यस्य–अनाकृतित्वेन संज्ञात्वमिति लोकेव्यवहारस्तथा वृद्धिशब्दादीनामपि–अनाकृतित्वेन संज्ञात्वसिद्धेः ।

( सिद्धान्तहेतुवार्तिकम् )

**लिङ्गेन वा**

(भाष्यम्)

**अथवा किंचिल्लिङ्गमासज्य वक्ष्यामि–इत्थं लिङ्गा संज्ञेति । वृद्धिशब्दे च तल्लिङ्गं करिष्यते नादैच्छब्दे ॥**

(आक्षेपभाष्यम्)

**इदं तावदयुक्तम् । यदुच्यते–आचार्याचारादिति ॥**

**किमत्रायुक्तम् ? ॥**

**तमेवोपालभ्य 'अगमकं ते सूत्रम् इति' तस्यैव पुनः प्रमाणीकरणमित्येतदयुक्तम् । अपरितुष्यन् खल्वपि भवाननेन परिहारेण "अनाकृतिर्लिङ्गेन वा इत्याह ॥**

(गौरवाक्षेपभाष्यम्)

**तच्चापि वक्तव्यम् ॥**

(लाघवप्रदर्शकभाष्यम्)

**यद्यप्येतदुच्यते । अथवैतर्हि इत्संज्ञा न वक्तव्या । लोपश्च न वक्तव्यः । संज्ञालिङ्गमनुबन्धेषु करिष्यते । न च संज्ञाया निवृत्तिरुच्यते । स्वभावतः संज्ञा संज्ञिनं प्रत्याय्य स्वयं निवर्तते । तेनानुबन्धानामपि निवृत्तिर्भविष्यति ॥ सिद्ध्यत्येवम् । अपाणिनीयं तु भवति ॥**

(सिद्धान्तभाष्यम्)

**यथान्यासमेवास्तु ॥**

लिङ्गेति—यद्वा किंचिल्लिङ्गयुक्तान्वृध्द्यादि शब्दान्पठित्वेत्थं लिङ्गा संज्ञेत्येतत्करणेनापि संज्ञासंज्ञ्यसंदेहसिद्धेः । नन्वेवमेव संज्ञालिङ्गमनुबन्धेषु करिष्यते । यथा–संज्ञा संज्ञिन प्रत्याय्य स्वयं निवर्तते, तथैवानुबन्धानामपि निवृत्तिसिद्धौ, इत्संज्ञालोपविधानं व्यर्थमिति वाच्यम् ।

इष्टापत्तेः । किंच वृद्धिरादैजित्यादिसूत्राणां प्रणयनसामर्थ्यादाचार्यकृतौ, अर्थमात्रावैयर्थ्यस्याप्यनाश्रयणात्, संज्ञासंज्ञिसंदेहनिवृतेरनुमानात् ।

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तं "संज्ञाधिकारः संज्ञासंप्रत्ययार्थ इतरथा ह्यसंप्रत्ययो यथा लोके" इति ॥

( समाधानभाष्यम् )

न च यथा लोके, तथा व्याकरणे । प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण ॥

किमतो यदशक्यम् ?

अतः संज्ञासंज्ञिनावेव ॥

( आक्षेपभाष्यम् )

कुतो नु खल्वेतत्–संज्ञासंज्ञिनावेवेति । न पुनः साध्वनुशासनेऽस्मिञ्शास्त्रे साधुत्वमनेन क्रियते ? ॥

( आक्षेपनिराकरणभाष्यम् )

कृतमनयोः साधुत्वम् ॥

कथम् ? ॥

वृधिरस्माद्यविशेषेणोपदिष्टः प्रकृतिपाठे तस्मात्क्तिन्प्रत्ययः । आदैचोऽप्यक्षरसमाम्नाये उपदिष्टाः ॥

न च वृद्धिरादैजित्यादिशब्दानां साधुत्वविधायकत्वेनैषां चारितार्थ्यमिति वाच्यम् । अन्यसूत्रैस्तेषां साधुत्वस्य सिद्धत्वात् ।

( आक्षेपभाष्यम् )

प्रयोगनियमार्थं तर्हीदं स्यात् – वृद्धिशब्दात्परे आदैचः प्रयोक्तव्या – इति ॥

( आक्षेपनिराकरणभाष्यम् )

नेह प्रयोग नियम आरभ्यते ॥ किं तर्हि ? । संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवति । तद्यथा – आहर पात्रम्, पात्रमाहरेति ॥

नेहेति—नेदं प्रयोगनियमार्थं सूत्रं भवितुमर्हति । संस्कृतवाक्येषु प्रयोगनियमस्यानादरणात् । तदेवोक्तम्-आहरपात्रं पात्रमाहरेति ।

( आक्षेपभाष्यम् )

**आदेशास्तर्हीमेस्युः । वृद्धिशब्दस्यादैच आदेशाः ॥**

( आक्षेपनिराकरणभाष्यम् )

**षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते । न चात्र षष्ठीं पश्यामः ॥ आगमास्तर्हीमे स्युर्वृद्धिशब्दस्यादैच आगमाः ॥ आगमा अपि षष्ठीनिर्दिष्टस्यैवोच्यन्ते । लिङ्गेन च । न चात्र षष्ठीं न खल्वप्यागमलिङ्गं पश्यामः ॥**

षष्ठीति—नैतत्सूत्रम्, आदेशागमलिङ्गार्थं भवितुमर्हति । आदेशागमलिङ्गाभावात् तत्तद्विधानार्थमसंभवात् ।

( सिद्धान्तसमाधानभाष्यम् )

**इदं खल्वपि भूयः सामानाधिकरण्यमेकविभक्तित्वं च । द्वयोश्चैतद्भवति ॥**

**कयोः ? ॥**

**विशेषणविशेष्ययोर्वासंज्ञासंज्ञिनोर्वा ॥ तत्रैतत्स्याद्विशेषणविशेष्ये-इति ॥ तच्च न, द्वयोर्हि प्रतीतपदार्थकयोर्लोके विशेषणविशेष्यभावो भवति । न चादैच्छब्दः प्रतीतपदार्थकः । तस्मात्संज्ञासंज्ञिनावेव ॥**

( सिद्धान्तभाष्यम् )

**तत्र त्वेतावान्संदेहः—कः संज्ञी का संज्ञेति ॥ स चापि क संदेहः ? ॥ यत्रोभे समानाक्षरे यत्र त्वन्यतरल्लघु सा संज्ञा, यद्गुरु स संज्ञी ॥**

**कुत एतत् ? ॥**

**लघ्वर्थं हि संज्ञाकरणम् ॥ तत्राप्ययं नावश्यं गुरुलघुतामेवोपलक्षयितुमर्हति ॥ किं तर्हि ? ॥ अनाकृतितामपि ।**

अनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥

( समाधानान्तरभाष्यम् )

अथवाऽऽवर्तिन्यः संज्ञा भवन्ति । वृद्धिशब्दश्चावर्तते, नादैच्छब्दः । तद्यथा—इतरत्रापि देवदत्तशब्द आवर्तते न मांसपिण्ड : ॥

लघ्विति—किञ्च वृध्यादिशब्दानां लघुत्वाच्छास्त्रेषु तेषामेवावृत्तेश्च तेषां संज्ञात्वोपपत्तिः ।

( समाधानान्तरभाष्यम् )

अथवा पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा । कुत एतत्? सतो हि कार्यिणः कार्येण भवितव्यम् । तद्यथा—इतरत्रापि सतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥

पूर्वेति—अदेङादिशब्दानां पूर्वोच्चारणेनोद्देश्यत्वावगत्या संज्ञित्वसिद्धिः । यथा—सति मांसपिण्डे देवदत्त इति संज्ञा कर्तुं शक्या नान्यथा, वस्त्वभावे, इति तत्त्वमवगन्तव्यमिति ।

( आक्षेपभाष्यम् )

कथं वृद्धिरादैज् इति ? ॥

( समाधानभाष्यम् )

एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम् । माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति ॥ सर्वत्रैव हि व्याकरणे पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा "अदेङ्गुणः" इति यथा ॥

( सिद्धान्तिभाष्यम् )

दोषवान्खल्वपि संज्ञाधिकारः । अष्टमेऽपि हि संज्ञा क्रियते—"तस्यपरमाम्रेडितम्" इति । तत्रापीदमनुवर्त्त्यं स्यात् ॥

वृद्धिरीति—वृद्धिरादैजिति तु मङ्गलार्थं विधेयस्यात्यादितः प्रयोगः । विधेयस्य पूर्वं प्रयोगे तद्वाक्यस्यासाधुत्वमिति भ्रमवारणाय-चेति तेषां संज्ञाधिकारमन्तरापि वृद्ध्यादिशब्दानां संज्ञात्वसिद्धिः । सत्यपि संज्ञाधिकारे तस्य परमाम्रेडितमित्याम्रेडितसंज्ञाया असंग्रह-प्रसङ्गश्चेति । अपृक्तएकालित्यस्य तु परिभाषात्वेन परिहारः

( समाधानान्तरभाष्यम् )

**अथवा— अस्थानेऽयं यत्नः क्रियते । न हीदं लोकाद्भिद्यते । यदीदं लोकाद्भिद्येत ततो यत्नार्हं स्यात् । तद्यथा—अगोज्ञाय कश्चिद्गां सक्थनि कर्णे वा गृहीत्वोपदिशति—अयं गौरिति । न चास्मायाचष्टे 'इयमस्य संज्ञा' इति । भवति चास्य संप्रत्ययः ॥**

( आक्षेपभाष्यम् )

**तत्रैतत्स्यात्—'कृतस्तत्र पूर्वैरभिसंबन्धः' इति ॥**

( समाधानभाष्यम् )

**इहापि कृतः पूर्वैरभिसंबन्धः । कैः ? । आचार्यैः ॥**

अभिसंबन्धो नाम संज्ञासंज्ञिभाव इत्यर्थः ।

( आक्षेपभाष्यम् )

**तत्रैतत्स्यात्—यस्मै तर्हि सम्प्रत्युपदिशति तस्याकृत इति ॥**

अकृत इत्यस्य तेनाज्ञात इत्यर्थः । अकृतत्वात् ज्ञातुमशक्य इत्यर्थः ।

( समाधानभाष्यम् )

**लोकेऽपि हि यस्मै सम्प्रत्युपदिशति तस्याकृतः । अथ तत्र कृतः, इहापि कृतो द्रष्टव्यः ॥**

( इतिसंज्ञाधिकारसंज्ञासंज्ञिसंदेहापाकरणाधिकरणम् )

---

( अथान्योन्याश्रयाक्षेपवार्त्तिकम् )

**॥ सतो वृद्ध्यादिषु संज्ञाभावात्तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः ॥**

( भाष्यम् )

**सतः संज्ञिनः संज्ञाभावात् । तदाश्रये संज्ञाश्रये संज्ञिनि वृद्ध्यादिष्वितरेतराश्रयत्वादप्रसिद्धिः ॥ का इतरेतराश्रयता ? ॥ सतामादैचां संज्ञया भवितव्यम्, संज्ञया चादैचो भाव्यन्ते, तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । तद्यथा नौर्नावि बद्धा नेतरत्राणाय भवति ॥**

( इतरेतराश्रयिदृष्टान्तभाष्यम् )

**ननु च भो इतरेतराश्रयाण्यपि कार्याणि दृश्यन्ते । तद्यथा—नौः शकटं वहति, शकटं च नावं वहति ॥**

( दृष्टान्तनिरासभाष्यम् )

**अन्यदपि तत्र किंचिद्भवति जलं स्थलं वा । स्थले शकटं नावं वहति । जले नौः शकटं वहति ॥**

( अन्यदृष्टान्तभाष्यम् )

**यथा तर्हि त्रिविष्टब्धकम् ॥**

( अन्यदृष्टान्तनिरसनभाष्यम् )

**तत्राप्यन्ततः सूत्रकं भवति ॥**

( आक्षेपोपसंहारभाष्यम् )

**इदं पुनरितरेतराश्रयमेव ॥**

( अन्योन्याश्रयवारकसिद्धान्तवार्तिकम् )

**॥ सिद्धन्तु नित्यशब्दत्वात् ॥**

( भाष्यम् )

**सिद्धमेतत् ॥ कथम् ? ॥ नित्यशब्दत्वात् । नित्याः शब्दाः, नित्येषु शब्देषु सतामादैचां संज्ञा क्रियते, न च संज्ञया-आदैचो भाव्यन्ते ॥**

सत इति—अत्र संज्ञासंज्ञिनिर्णये इतरेतराश्रयदोषात्कथं संदेहनिरास इत्येतद्विचार्यते । इतरेतराश्रयस्य कार्यबाधकत्वेऽपि कार्य-

साधकत्वमप्यस्तीत्याक्षेपः । विशेषतस्तु कार्यसाधकेऽपीतरेतराश्रये अन्यसाधनापेक्षत्वात् तच्चात्र नास्तीति शंकानिरासस्यावश्यकत्वादित्यभिप्रायः । तस्मादेवोक्तं वार्तिककृता सिद्धं तु नित्यशब्दत्वादिति । सिद्धानामेवादैचां संज्ञा क्रियते, नच संज्ञया-आदैचो भाव्यन्ते इति सुसमाधानात् ।

( आक्षेपभाष्यम् )

**यदि तर्हि नित्याः शब्दाः, किमर्थं शास्त्रम् ? ॥**

( आक्षेपवारकसिद्धान्तवार्तिकम् )

**॥ किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् ॥**

( भाष्यम् )

**निवर्तकं शास्त्रम् ॥ कथम् ? ॥ मृजिरस्मायविशेषेणोपदिष्टः । तस्य सर्वत्र मृजिबुद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते मृजेरङ्कित्सु प्रत्ययेषु मृजिप्रसङ्गे मार्जिः साधुर्भवतीति ॥**

न च शब्दानां नित्यत्वे मृजेर्वृद्धिरित्यादिशास्त्रवैयर्थ्यापत्तिः । मृजिप्रसङ्गे मार्जिरेव साधुर्भवतीति नियमार्थं तस्यावश्यकत्वात् ।

( आक्षेपवार्तिकम् )

**॥ वृद्धिगुणसंज्ञयोः प्रत्येकं वचनम् ॥**

**वृद्धिगुणसंज्ञयोः प्रत्येकं ग्रहणं कर्तव्यम् ॥ प्रत्येकं वृद्धिगुणसंज्ञे भवत इति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ समुदाये मा भूतामिति ॥**

( आक्षेपवारकसिद्धान्तिवार्तिकम् )

**॥ अन्यत्र सहवचनात्समुदाये संज्ञाप्रसङ्गः ॥**

**अन्यत्र सहवचनात्समुदाये वृद्धिगुणसंज्ञयोरप्रसङ्गः । यत्रेच्छति सहभूतानां कार्यं करोति तत्र सहग्रहणम् । तद्यथा—" सहसुपा " उभे अभ्यस्तं सह इति ॥**

अन्यत्र सहवचनात्समुदाये वृद्ध्यादिसंज्ञाया अप्रसक्तेः ।

( आक्षेपवारकसिद्धान्तिवार्तिकम् )

॥ प्रत्यवयवं च वाक्यपरिसमाप्तेः ॥

( भाष्यम् )

प्रत्यवयवं च वाक्यपरिसमाप्तिर्दृश्यते । तद्यथा—देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति । न चोच्यते प्रत्येकमिति । प्रत्येकं च भुजिः परिसमाप्यते ॥

प्रत्येति—देवदत्तेत्यादिवाक्ये प्रत्येकमिति शब्दाभावेति प्रत्येकं भुजिक्रियायाः परिसमाप्तेर्दृष्टत्वात्प्रत्येकं गुणवृध्यादिसंज्ञाः सिध्यन्ति ।

( आक्षेपभाष्यम् )

ननु चायमप्यस्तिदृष्टान्तः—"समुदाये वाक्यपरिसमाप्तिः" इति तद्यथा—'गर्गाःशतं दण्ड्यताम्' इति । अर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति ॥

( समाधानभाष्यम् )

सत्येतस्मिन्दृष्टान्ते यदि तत्र सहग्रहणं क्रियते, इहापि प्रत्येकमिति वक्तव्यम् । अथ तत्रान्तरेण सहग्रहणं सहभूतानां कार्यं भवति, इहापि नार्थः प्रत्येकमितिवचनेन ॥

( आक्षेपभाष्यम् )

अथ किमर्थमाकारस्तपरः क्रियते? ॥

( सिद्धान्तसमाधानवार्तिकम् )

॥ आकारस्य तपरकरणं सवर्णार्थम् ॥

( भाष्यम् )

आकारस्य तपरकरणं क्रियते ॥ किं प्रयोजनम्? ॥ सवर्णार्थम् ॥ "तपरस्तत्कालस्य" इति तत्कालानां सवर्णानां ग्रहणं यथा स्यात् ॥ केषाम्? ॥ उदात्तानुदात्तस्वरितानाम् ॥ किं च कारणं न स्यात्? ॥

( एकदेशिवार्तिकम् )

॥ भेदकत्वात्स्वरस्य ॥

( भाष्यम् )

भेदका उदात्तादयः ॥ कथं पुनर्ज्ञायते - भेदका उदात्तादय इति ? ॥ एवं हि दृश्यते लोके,-य उदात्ते कर्त्तव्येऽनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटां ददाति अन्यत्वं करोषीति ॥ अस्ति प्रयोजनमेतत् । किं तर्हि ? ॥ इति ॥

( अन्यद्वार्तिकम् )

॥ भेदकत्वाद्गुणस्य ॥

( भाष्यम् )

भेदकत्वाद्गुणस्येति वक्तव्यम् । किं प्रयोजनम् ? ॥ आनुनासिक्यं नाम गुणः, तद्भिन्नस्यापि ग्रहणं यथा स्यात् ॥ किं च कारणं न स्यात् ? ॥ भेदकत्वाद्गुणस्य भेदका गुणाः ॥ कथं पुनर्ज्ञायते - भेदका गुणा इति ? ॥ एवं हि दृश्यते लोके, एकोऽयमात्मा उदकं नाम, तस्य गुणभेदादन्यत्वं भवति - अन्यदिदं शीतम्, अन्यदिदमुष्णमिति ॥

( सिद्धान्तभाष्यम् )

ननु च भो अभेदका अपि गुणा दृश्यन्ते । तद्यथा - देवदत्तो मुंड्यपि जट्यपि शिख्यपि स्वामाख्यां न जहाति, तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द इति ॥

( आक्षेपभाष्यम् )

उभयमिदं गुणेषूक्तम् - भेदकाः अभेदका इति । किं पुनरत्र न्याय्यम् ? ॥

( सिद्धान्तभाष्यम् )

अभेदका गुणा इत्येव न्याय्यम् । कुत एतत् ? ॥ यदयम् - "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इत्युदात्तग्रहणं करोति तज्ज्ञापयत्याचार्योऽभेदका गुणा इति । यदिहि भेदका गुणास्युः उदात्तमेवोच्चारयेत् ॥

( आक्षेपभाष्यम् )

यदि तर्ह्यभेदका गुणा अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्स्वरितादेः स्वरितान्ताच्च प्राप्नोति ॥

( समाधानभाष्यम् )

नैष दोषः । आश्रीयमाणो गुणो भेदको भवति । 'शुक्लमालभेत कृष्णमालभेत' तत्र यः शुक्लमालब्धव्ये कृष्णमालभते, न हि तेन यथोक्तं कृतं भवति ॥

( एकदेशिसमाधानभाष्यम् )

असंदेहार्थस्तर्हि तकारः । ऐजित्युच्यमाने संदेहः स्यात्—किमिमावैचावैच, आहोस्विदाकारोऽप्यत्र निर्दिश्यत इति ?॥

( समाधानबाधकभाष्यम् )

संदेहमात्रमेतद्भवति । सर्वसंदेहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति त्रयाणां ग्रहणमिति व्याख्यास्यामः । अन्यत्रापि ह्ययमेवंजातीयकेषु संदेहेषु न कंचिद्यत्नं करोति । तद्यथा—"औतोम्शसोः" इति ॥

( सिद्धान्तिसमाधानभाष्यम् )

इदं तर्हि प्रयोजनम्—आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा इन्द्रः खट्वेन्द्रः, खट्वा उदकं खट्वोदकम्, खट्वा ईषा खट्वेषा, खट्वा ऊढा खट्वोढा, खट्वा एलका खट्वैलका, खट्वा ओदनः खट्वौदनः, खट्वा ऐतिकायनः खट्वैतिकायनः, खट्वा औपगवः खट्वौपगव इति ॥

( आक्षेपभाष्यम् )

अथ क्रियमाणेऽपि तकारे कस्मादेव त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ? ॥

( समाधानभाष्यम् )

" तपरस्तत्कालस्य " इति नियमात् ॥

( बाधकभाष्यम् )

**ननु तः परो यस्मात्सोऽयं तपरः ॥**

( समाधानसाधकभाष्यम् )

**नेत्याह तादपि परस्तपरः ॥**

( इष्टानुपपत्तिभाष्यम् )

**यदि तादपि परस्तपरः "ऋदोरप्" इतीहैव स्यात्-यवः स्तवः, लवः पवः इत्यत्र न स्यात् ॥**

( अनुपपत्तिबाधकभाष्यम् )

**नैष तकारः ॥ कस्तर्हि दकारः ।**

( आक्षेपभाष्यम् )

**किं दकारे प्रयोजनम् ? ॥**

( समाधानभाष्यम् )

**अथ किं तकारे ? यद्यसंदेहार्थस्तकारः दकारोऽपि । अथ मुखसुखार्थस्तकारः दकारोऽपि ॥ वृद्धिरादैच् ॥ १ ॥**

अथेति — आदिति तपरकरणं तपरसूत्रेण तत्कालानामुदात्तादीनामनुनासिकग्रहणार्थम् । अन्यथा भेदका गुणा इति तद्ग्रहणानापत्तिः । अस्थिदधीत्यत्र – उदात्तग्रहणेन, असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदक इति ज्ञापनेन उदात्तादीनां ग्रहणसिद्धिरित्युच्यते तदा असंदेहार्थस्तकारः । ऐजित्युक्तौ तु अत्राकारः प्रश्लिष्टोस्ति नवेति संदेहः स्यात् । व्याख्यानत इत्यनेन औतोम्शसोरितिवत्संदेह निवृत्तौ" तु ऐच्छब्देन त्रिमात्रादीनामैचां वृद्धिसंज्ञाभावार्थं तकारः । तपरसूत्रे तात्पर इति पंचमीतत्पुरुषादैच्छब्दस्य तपरत्वेन तद्ग्रहणसिद्धिः । ऋदोरबित्यत्र तु दकारोऽसंदेहार्थः । मुखसुखार्थश्च न तु तकार इति ।

## इको गुणवृद्धी ॥ १।१।३

(आक्षेपभाष्यम्)

**इग्ग्रहणं किमर्थम्? ॥**

(समा० वार्तिकम्)

**॥ इग्ग्रहणमात्संध्यक्षरव्यञ्जननिवृत्त्यर्थम् ॥**

(भाष्यम्)

**इग्ग्रहणं क्रियते किं प्रयोजनम्? ॥ आकारनिवृत्त्यर्थं संध्यक्षरनिवृत्त्यर्थं व्यञ्जननिवृत्त्यर्थं च ॥ आकारनिवृत्त्यर्थं तावत्–याता वातः । आकारस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥ सन्ध्यक्षरनिवृत्त्यर्थम्–ग्लायति म्लायति । सन्ध्यक्षरस्य गुणः प्राप्नोति इग्ग्रहणान्न भवति ॥ व्यञ्जननिवृत्त्यर्थम्–उम्भिता उम्भितुम् उम्भितव्यम् । व्यञ्जनस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥**

(निराकरणभाष्यम्)

**आकारनिवृत्त्यर्थेन तावन्नार्थः । आचार्यप्रवृत्तिर्ज्ञापयति–नाकारस्य गुणो भवतीति । यदयम् "आतोऽनुपसर्गे कः" इति ककारमनुबन्धं करोति ॥ कथं कृत्वा ज्ञापकम्? कित्करण एतत्प्रयोजनम्–कितीत्याकारलोपो यथा स्यात् । यदि चाकारस्य गुणः स्यात्, कित्करणमनर्थकं स्यात् । गुणे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्यात्–गोदः कम्बलद इति । पश्यति त्वाचार्यो–नाकारस्य गुणो भवतीति, ततः ककारमनुबन्धं करोति, सन्ध्यक्षरनिवृत्त्यर्थेनापि नार्थः । उपदेशसामर्थ्यात्सन्ध्यक्षरस्य गुणो न भवति ॥**

**व्यञ्जननिवृत्त्यर्थेनापि नार्थः । आचार्यप्रवृत्तिर्ज्ञापयति न–व्यञ्जनस्य गुणो भवतीति । यदयं जनेर्ड शास्ति ॥ कथं कृत्वा ज्ञापकम्? ॥ डित्करण एतत्प्रयोजनम्–डितीति**

टिलोपो यथा स्यात्। यदि व्यञ्जनस्य गुणः स्यात्, डित्करणमनर्थकं स्यात्। गुणे कृते त्रयाणामकाराणां पररूपेण सिद्धं रूपं स्यादुपसरजो मन्दुरज इति । पश्यति त्वाचार्यो न व्यञ्जनस्य गुणो भवतीति । ततो जनेर्ड इत्यस्ति ॥

नैतानि सन्ति ज्ञापकानि । यत्तावदुच्यते—कित्करणं ज्ञापकं नाकारस्य गुणो भवतीति ॥ उत्तरार्थमेतत्स्यात्—"तुन्दशोकयोः परिमृजापनुदोः" इति ॥

यत्तर्हि "गापोष्टक्" इत्यनन्यार्थं ककारमनुबन्धं करोति ॥ यदप्युच्यते—उपदेशसामर्थ्यात्सन्ध्यक्षरस्य गुणो न भवतीति । यदि-यद्यत्संध्यक्षरस्य प्राप्नोति, तत्तदुपदेशसामर्थ्याद्बाध्यते । आयादयोऽपि तर्हि न प्राप्नुवन्ति ॥

नैष दोषः । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते। यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। गुणं च प्रत्युपदेशोऽनर्थकः । आयादीनां पुनर्निमित्तमेव ॥

यदप्युच्यते जनेर्डवचनं ज्ञापकं न व्यञ्जनस्य गुणो भवतीति ॥ सिद्धेविधिरारभ्यमाणो ज्ञापकार्थो भवति ॥ न च जनेर्गुणेन सिध्यति।कुतोह्येतत् ॥ जनेर्गुण उच्यमानोऽकारो भवति, न पुनरेकारो वा स्यादोकारो वेति ? ॥

(ज्ञापकसाधकभाष्यम्)

आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्य मात्रिकोऽकारो भविष्यति ॥

(ज्ञापकबाधकभाष्यम्)

एवमप्यनुनासिकः प्राप्नोति ॥

(ज्ञापकसाधकभाष्यम्)

पररूपेण शुद्धो भविष्यति ॥

(ज्ञापकबाधकभाष्यम्)

एवं तर्हि गमेरप्ययं डो वक्तव्यः । गमेश्च गुण उच्यमाने आन्तर्यत ओकारः प्राप्नोति ॥ तस्मादिग्ग्रहणं कर्तव्यम् ॥

इग्ग्रहणमिति — इग्ग्रहणं किमर्थं ? । व्यञ्जनस्य गुणो माभूत्, उम्भिता उम्भितुम् । न च जनेर्डस्य डित्करणसामर्थ्यात् व्यञ्जनस्य गुणो न भवतीति ज्ञाप्यते । अन्यथा मात्राद्वयन्यूनकालिकत्वरूपप्रमाणत आन्तर्यान्नकारस्य—अकारे गुणे त्रयाणामकाराणां पररूपेण सिद्धेः । न च—अनुनासिकः स्यात् । पररूपेण शुद्धस्यैव श्रवणेन दोषाभावादिति वाच्यम् । गमेर्मस्य—आन्तरतम्यादोकारे फलभेदापत्तेस्तद्वारणार्थं डित्करणस्य चारितार्थ्यात् । इग्ग्रहणमाकारसन्ध्यक्षर निवृत्त्यर्थं तु न । गापोष्टगिति कित्करणसामर्थ्यादाकारस्य गुणो न भवतीति ज्ञापनेन दोषाभावात् ।

( आक्षेपभाष्यम् )

**यदीग्ग्रहणं क्रियते, द्यौः पन्थाः सः इमामिति, एतेऽपीकः प्राप्नुवन्ति ॥**

( सिद्धान्तसमाधानवार्तिकम् )

**॥ संज्ञया विधाने नियमः ॥**

( भाष्यम् )

**संज्ञया ये विधीयन्ते तेषु नियमः ॥**

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ?**

( समाधानभाष्यम् )

**नहि ॥ कथमनुच्यमानं गंस्यते ? ॥ गुणवृद्धिग्रहणसामर्थ्यात् ॥**

( आक्षेपभाष्यम् )

**कथं पुनरन्तरेण गुणवृद्धिग्रहणमिको गुणवृद्धी स्याताम् ? ॥**

( समाधानभाष्यम् )

**प्रकृतं गुणवृद्धिग्रहणमनुवर्तते ॥ क्व प्रकृतम् ? ॥ वृद्धिरादैजदेङ्गुण इति ॥**

( आक्षेपभाष्यम् )

यदि तदनुवर्तते, अदेङ्गुणो वृद्धिश्च इत्यदेङां वृद्धिसंज्ञापि प्राप्नोति ॥

( समाधानभाष्यम् )

सम्बन्धमनुवर्तिष्यते - "वृद्धिरादैच्" । "अदेङ्गुणः" इति वृद्धिरादैच् । ततः "इको गुणवृद्धी" इति, गुणवृद्धिग्रहणमनुवर्तते, आदैजदेङ्ग्रहणं निवृत्तम् ॥

( समाधानान्तरभाष्यम् )

अथवा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ॥

( एकदेशिसमाधानान्तरभाष्यम् )

अथवैकयोगः करिष्यते - "वृद्धिरादैजदेङ्गुणः" ततः "इको गुणवृद्धी" इति । नचैकयोगेऽनुवृत्तिर्भवति ॥ अथवा अन्यवचनाच्चकाराकरणाच्च प्रकृतापवादो विज्ञायते, यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति ॥

अन्यस्याः संज्ञाया वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात्प्रकृताया वृद्धिसंज्ञाया गुणसंज्ञा बाधिका भविष्यति । यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति ॥ अथवा वक्ष्यत्येतत् - अनुवर्तन्ते च नाम विधयः ॥ न चानुवर्तनादेव भवन्ति । किं तर्हि ? । "यत्नाद्भवन्ति" इति ॥ अथवा - उभयं निवृत्तम् । तदपेक्षिष्यामहे ॥

अस्मिन्सूत्रे गुणवृद्धिग्रहणानुवृत्त्यैवं सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्याद्गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी तत्रैवेतत्सूत्रप्रवृत्तेः । तेन द्यौः पन्थाः सः इममित्यादौ न दोषः । न चात्र वृद्धिपदानुवृत्त्या अदेङां वृद्धिसंज्ञापत्तिरिति वाच्यम् । आदैच्सम्बद्धस्यैव वृद्धिपदस्य तत्रानुवृत्तावपि कान्तारोत्तरणन्यायेन अदेङ्भिः सम्बन्धाभावान्नादेङां वृद्धिसंज्ञा-

पत्तिः । यद्वा वृद्धिरादैजदेङ्गुण इत्येको योगः । गुणवृद्धीत्यपरः । न चैकयोगेऽनुवृत्तिर्भवतीति – अदेङ्गुण इति वाक्ये वृद्धिपदानुवृत्तेरयोगात् । अथवा–अदेङामन्यसंज्ञाबोधनाच्चकाराकरणाच्च–अदेङ्विषये गुणसंज्ञा वृद्धिसंज्ञायाः बाधिका भविष्यति । अथवा मण्डूकप्लुत्या वृद्धिपदस्यानुवृत्तिर्भविष्यति ।

( इति कूपदोपस्थारकलिङ्गाधिकरणम् )

---

( अथपरिभाषात्वसाधकाधिकरणम् )

( आक्षेपभाष्यम् )

किं पुनरयमलोन्त्यशेषः, आहोस्विदलोन्त्यापवादः ?॥

( प्रत्याक्षेपभाष्यम् )

कथं चायं तच्छेषः स्यात्, कथं वा तदपवादः ? ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

यद्येकं वाक्यम् – तच्चेदं च, अलोऽन्त्यस्य विधयो भवन्ति – "इको गुणवृद्धी अलोन्त्यस्य" इति । ततोऽयं तच्छेषः ॥ अथ नाना वाक्यम् – तच्चेदं च, अलोन्त्यस्य विधयो भवन्ति, 'इकोगुणवृद्धि अन्त्यस्य चानन्त्यस्य च' इति । ततोऽयं तदपवादः ॥ कश्चात्र विशेषः ? ।

( तच्छेषपक्षदूषणवार्तिकम् )

॥ वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं कर्तव्यम् ॥

( व्याख्याभाष्यम् )

"मिदेर्गुणः" 'इक् इति वक्तव्यम्' अनन्त्यत्वाद्धि न प्राप्नोति ॥ "मृजेर्वृद्धिः" 'इक इति वक्तव्यम्' अनन्त्यत्वाद्धि न प्राप्नोति ॥ पुगन्तलघूपधस्य गुणः, 'इक इति वक्तव्यम्' अनन्त्यत्वाद्धि न प्राप्नोति ॥ ऋच्छेर्लिटि गुणः इक इति वक्तव्यम्, अन्त्यत्वाद्धि न प्राप्नोति ॥ ऋदृशोऽङि

गुणः 'इक इति वक्तव्यम्' अनन्त्यत्वाद्धि न प्राप्नोति ॥ क्षिप्रक्षुद्रयोर्गुणः 'इक इति वक्तव्यम्' अनन्त्यत्वाद्धि न प्राप्नोति ॥

( तच्छेषदूषणान्तरवार्तिकम् )

॥ सर्वादेशप्रसङ्गश्चानिगन्तस्य ॥

( एकदेशिभाष्यम् )

सर्वादेशश्च गुणोऽनिगन्तस्य प्राप्नोति याता वाता ॥ किं कारणम्? "अलोन्त्यस्य" इति षष्ठी चैव ह्यन्त्यमिकमुपसंक्रान्ता, अङ्गस्येति च स्थानषष्ठी । तद्यदिदानीमनिगन्तमङ्गं तस्य गुणः सर्वादेशः प्राप्नोति ॥

( दूषणोद्धारभाष्यम् )

नैष दोषः, यथैव ह्यलोन्त्यस्येति ॥ षष्ठी अन्त्यमिकमुपसंक्रान्ता, एवमङ्गस्येत्यपि स्थानषष्ठी । तद्यदिदानीमनिगन्तमङ्गं तत्र षष्ठ्येव नास्ति, कुतो गुणः कुतः सर्वादेशः ॥

( वार्तिकसमन्वयान्तरभाष्यम् )

एवं तर्हि नायं दोषसमुच्चयः ॥ किं तर्हि ।? पूर्वपक्षोऽयं दोषः। ह्यर्थे चायं चः पठितः—मिदिमृजिपुगन्तलघूपधर्च्छिक्षिप्रक्षुद्रेष्विग्ग्रहणं सर्वादेशप्रसङ्गो ह्यनिगन्तस्य इति। 'मिदेर्गुणः' इक इति वचनादन्त्यस्य न, 'अलोन्त्यस्य' इति वचनादिको न । उच्यते च गुणः, सर्वादेशः प्राप्नोति । एवं सर्वत्र ॥

( इति तच्छेषपक्षखण्डनम् )

सार्वधातुकार्धधातुकयोरित्यादौ यदि पूर्वमिकाङ्गं विशेष्यते, इगन्ताङ्गस्य गुणो भवतीति । स च भवन्—अलोन्त्यस्येत्यन्तस्य भविष्यति, तदा चायमलोन्त्यस्येत्यस्य शेष इति उभयरूपस्तच्छेषपक्षश्चात्र संभवति । अथ यदि गुणादिविधौ अङ्गस्येति न स्थानषष्ठी, किन्तु इगपेक्षया अवयवषष्ठी, तदा स्थानषष्ठ्यभावात्—अलोन्त्यस्ये-

त्यस्य—अनुपस्थानमिति तदपवादपक्षः । अप्राप्त्यनुमानरूप एवात्र बाधः । ततश्चापवादपक्षे अन्त्यानन्त्यसाधारणस्येको गुणवृद्धीत्यर्थः संपद्यते । परंतु, उभावपि न युक्तौ । तत्राद्यपक्षे मिदिमृजीत्यादौ इग्ग्रहणं सर्वादेशप्रसङ्गोऽप्यनिगन्तस्येति । मिदेर्गुण इति वचनादन्त्यस्य न । अलोऽन्त्येति वचनादिको न । उच्यते च गुणः सर्वादेशः प्राप्नोति एवं सर्वत्र बोध्यम् ।

( अथतदपवादपक्षाभ्युपगमभाष्यम् )

अस्तु तर्हि तदपवादः ॥

( तदपवादपक्षदूषणवार्तिकम् )

इङ्मात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः ॥

( भाष्यम् )

इङ्मात्रस्येति चेज्जुसि सार्वधातुकार्द्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधो वक्तव्यः ॥ जुसि गुणः—स यथेह भवति—'अजुहवुः अबिभयुः' इति । एवम् अनेनिजुः पर्यवेविषुः अत्रापि प्राप्नोति ॥ सार्वधातुकार्द्धधातुकयोर्गुणः—यथेह भवति—'कर्ता हर्ता नयति तरति' इति । एवम्—ईहिता ईहितुम् ईहितव्यम्' इत्यत्रापि प्राप्नोति ॥

ह्रस्वस्य गुणः—स यथेह भवति—'हे अग्ने हे वायो' इति । एवम् हे 'अग्निचित् हे सोमसुत्' इत्यत्रापि प्राप्नोति ॥

जसि गुणः—स यथेह भवति—'अग्नयो वायवः' इति एवं 'अग्निचितः सोमसुतः' इत्यत्रापि प्राप्नोति ॥

ऋतोङिसर्वनामस्थानयोर्गुणः—स यथेह भवति—'कर्तरि कर्तारौ कर्तारः' इति । एवं सुकृति 'सुकृतौ सुकृतः' इत्यत्रापि प्राप्नोति ॥

घेर्ङिति गुणः स यथेह भवति—'अग्नये वायवे' इति । एवम् 'अग्निचिते सोमसुते' इत्यत्रापि प्राप्नोति ॥ ओर्गुणः

स यथेह भवति—'बाभ्रव्यो माण्डव्यः' इति । एवं सुश्रुत् सौश्रुत इत्यत्रापि प्राप्नोति ॥

नैष दोषः ॥

( सिद्धान्त्येकदेशिवार्तिकम् )

पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम् ॥

( भाष्यम् )

पुगन्तलघूपधग्रहणमनन्त्यनियमार्थं भविष्यति—पुगन्तलघूपधस्यैवानन्त्यस्य नान्यस्यानन्त्यस्येति ॥

( नियमदूषणभाष्यम् )

प्रकृतस्यैव नियमस्यात् । किं च प्रकृतम्? ॥ "सार्वधातुकार्द्धधातुकयोः" इति ॥ तेन भवेदिह नियमान्न स्यात् 'ईहिता ईहितुम् ईहितव्यम्' इति । ह्रस्वाद्योर्गुणस्त्वनियतः सोऽनन्त्यस्यापि प्राप्नोति

( नियमान्तरदूषणभाष्यम् )

अथाप्येवं नियमस्यात्— पुगन्तलघूपधस्य सार्वधातुकार्द्धधातुकयोरेवेति ॥ एवमपि सार्वधातुकार्द्धधातुकयोर्गुणोऽनियतः सोनन्त्यस्यापि प्राप्नोति—ईहिता ईहितुम् ईहितव्यमिति ॥

( उभयविधनियमदूषणभाष्यम् )

अथाप्युभयतो नियमःस्यात्—पुगन्तलघूपधस्यैव सार्वधातुकार्द्धधातुकयोः । सार्वधातुकार्द्धधातुकयोरेव पुगन्तलघूपधस्येति ॥ एवमप्ययं जुसि गुणोऽनियतः सोनन्त्यस्यापि प्राप्नोति—अनेनिजुः पर्यवेविषुः इति ॥

तदपवाद इति — तदपवादपक्षे तु इङ्मात्रस्यान्त्यानत्यसाधारणस्येति चेज्जुसि सार्वधातुकार्द्धधातुकन्हस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधो वक्तव्यः । अन्यथा जुसि गुणः नयताविव ईहितेत्यत्रापिस्यात् । ह्रस्वस्यगुणः अग्नेरितिवत् अग्निचिदित्यत्रापि स्यात् । जुसि च —ऋतोङिति च

गुणौ, अग्नयः कर्तार इतिवत् अग्निचितः सुकृत इत्यत्रापि स्यात् । एवं घेर्ङिति ओर्गुणः अनन्त्यस्यापिस्यात् । पुगन्तलघूपधस्येति सूत्रस्य पुगन्तलघूपधस्यैव सार्वधातुकार्द्धधातुकयोः, सार्वधातुकार्द्धधातुकयोरेव पुगन्त लघूपधस्येति द्विविधनियमार्थकल्पनेन ईहितेत्यादौ वारणेऽपि, जुसि चेति गुणस्य नियमानाक्रान्तत्वेन अनेनिजुरित्यत्र तत्प्रवृत्तेर्वारयितुमशक्यत्वात् । तस्मान्नायमिको गुणेति सूत्रं तच्छेषो नापि तपद्वादः ।

( परिभाषापक्षनिराकरणभाष्यम् )

**एवं तर्हि नायं तच्छेषः नापि तदपवादः । अन्यदेवं परिभाषान्तरमसंबद्धमनया परिभाषया ॥**

किन्तु — अन्यदेव परिभाषान्तरमसंबद्धमलोन्त्यस्येत्यनेन ।

**परिभाषान्तरमिति च मत्वा क्रोष्ट्रीयाः पठन्ति ॥ नियमादिको गुणवृद्धी भवतो विप्रतिषेधेन ॥ इति ॥ यदि चायं तच्छेपःस्यात्तेनैव तस्यायुक्तो विप्रतिषेधः ॥ उत्सर्गापवादयोरप्ययुक्तो विप्रतिषेधः ॥ तत्र नियमस्यावकाशः—" राज्ञः क च " राजकीयम् । " इको गुणवृद्धी " इत्यस्यावकाशः ' चयनं चायको लवनं लावकः ' इति । इहोभयं प्राप्नोति— ' मेद्यति मार्ष्टि ' इति । " इकोगुणवृद्धी " इत्येतद्भवति विप्रतिषेधेन ॥**

( विप्रतिषेधबाधकभाष्यम् )

**नैष युक्तो विप्रतिषेधः । " विप्रतिषेधे परम् " इत्युच्यते । पूर्वश्चायं योगः, परो नियमः ॥**

( विप्रतिषेधसाधकभाष्यम् )

**इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति ।**

( विप्रतिषेधबाधकभाष्यम् )

**एवमप्ययुक्तो विप्रतिषेधः । द्विकार्ययोगो हि विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः ॥**

( विप्रतिषेधसाधकभाष्यम् )

नावश्यं द्विकार्ययोग एव विप्रतिषेधः ॥ किं तर्हि? ॥ असंभवोऽपि। स चास्त्यत्रासंभवः ॥ कोऽसावसंभवः? ॥ इह तावद्–'वृक्षेभ्यः प्लक्षेभ्यः' इति–एकः स्थानी, द्वावादेशौ, न चास्ति संभवः यदेकस्य स्थानिनो द्वावादेशौ स्याताम्। इहेदानीं–'मेद्यति मेद्यतः मेद्यन्ति' इति द्वौ स्थानिनौ, एक आदेशः, न चास्ति संभवः–द्वयोः स्थानिनोरेक आदेशः स्यादित्येषोऽसंभवः। सत्येतस्मिन्नसंभवे युक्तो विप्रतिषेधः ॥

( विप्रतिषेधबाधकभाष्यम् )

एवमप्ययुक्तो विप्रतिषेधः। द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति। अनवकाशश्चायं योगः ॥

( विप्रतिषेधसाधारणभाष्यम् )

ननु च–इदानीमेवास्यावकाशः प्रक्लृप्तः–चयनं चायको लवनं लावक इति ॥

( विप्रतिषेधबाधकभाष्यम् )

अत्रापि नियमः प्राप्नोति। नाप्राप्ते नियमेऽयं योग आरभ्यते। यावता च नाप्राप्ते नियमेऽयं योग आरभ्यते ततस्तस्यापवादोऽयं योगो भवति। उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः। अथापि कथंचित् "इकोगुणवृद्धी" इत्यस्यावकाशः स्यात्। एवमपि यथेह विप्रतिषेधादिको गुणो भवति मेद्यति मेद्यतः मेद्यन्ति, इति एवमिहापि स्यात्–अनेनिजुः पर्यवेविषुरिति ॥

( इति असंबद्धपरिभाषापक्षनिरासाधिकरणम् )

---

( अथसिद्धान्तभूतपदोपस्थितिपक्षनिरूपणम् )

( सिद्धान्तिभाष्यम् )

एवं तर्हि वृद्धिर्भवति गुणो भवतीति यत्र ब्रूयात् ' इकः ' इत्येतत्तत्रोपस्थितं द्रष्टव्यम् ॥ किं कृतं भवति ? ॥ द्वितीया षष्ठी प्रादुर्भाव्यते ॥ तत्र कामचारः–गृह्यमाणेन वेकं विशेषयितुम्, इका वा गृह्यमाणम् । यावता कामचारः, इह तावन्मिदि मृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेषु गृह्यमाणेनेकं विशेषयिष्यामः एतेषां य इगिति । इहेदानीं जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्विका गृह्यमाणं विशेषयिष्यामः–एतेषां गुणो भवति इकः इगन्तानामिति ॥

अत एव क्रोष्ट्रीयाः नियमादिको गुणवृद्धी भवतो विप्रतिषेधेनेति वदन्ति । अन्यथा शेषशेषिभावे उत्सर्गापवादभावे च विप्रतिषेधोक्तेरसङ्गत्यापत्तेः । विप्रतिषेधसूत्रे परशब्दस्येष्टवाचित्वादत्रपूर्वविप्रतिषेधसत्वेऽपि न क्षतिः । अत्र मेद्यतीत्यादौ द्वौस्थानिनौ एक आदेश इत्यसंभवात्, विप्रतिषेधेपरमित्यस्य प्रवृत्तिरयुक्तैव । न चालोन्त्यस्येति बाधित्वा, इको गुणवृद्धीत्यस्य प्रवृत्तिस्वीकारे, अनेनिजुरित्यत्र गुणापत्तिः । गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते, तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते, इति पर्यवसितार्थकथनेन, मिदिमृज्यादौ एतेषां य इगित्यर्थकरणेन, जुसिचेत्यादौ इगन्तस्येत्यर्थकरणेन च दोपस्य वारणात् ।

( तच्छेषपक्षोक्तदूषणनिराकरणभाष्यम् )

अथवा सर्वत्रैवात्र स्थानी निर्दिश्यते । इह तावन्मिदेरित्यविभक्तिको निर्देशः । मिद् एः मिदेरिति ॥ अथवा षष्ठीसमासो भविष्यति – मिद् इः मिदिः मिदेरिति ॥ पुगन्तलघूपधस्येति । नैवं विज्ञायते–पुगन्ताङ्गस्य लघूपधस्य चेति ॥ कथं तर्हि ? ॥पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधा, पुगन्तश्च लघूपधा च पुगन्तलघूपधम्, पुगन्तलघूपधस्येति ।

अवश्यं चैतदेवं विज्ञेयम्, अङ्गविशेषणे सतीह प्रसज्येत भिनत्ति छिनत्तीति ॥

ऋच्छेरपि प्रश्लिष्टनिर्देशोऽयम्—ऋच्छति ऋऋृताम्= "ऋच्छत्यृताम्" इति ॥

दृशेरपि योगविभागः करिष्यते,—"उरङि गुणः" उः अङि गुणो भवति । ततो "दृशेः" दृशेश्चाङि गुणो भवति । उरित्येव ॥

क्षिप्रक्षुद्रयोरपि "यणादिपरं गुणः" इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम्—इको यथास्यादनिको मा भूदिति ॥

तच्छेषपक्षेऽपि मिदेर्गुण इत्यादौ मिद इः इत्यर्थात्, पुगन्तेत्यत्र; पुकि अन्तः पुगन्तः लघ्वी उपधा लघूपधा इत्यर्थकरणात्, ऋच्छत्यृतामित्यत्र, ऋकारप्रश्लेषात्; ऋदृशोऽङिगुणः इत्यत्र उरङिगुणः ततो दृशः उरित्येव क्षिप्रक्षुद्रयोरपि यणादिपरं गुण इति सिद्धेः पूर्वग्रहणसामर्थ्यात्—इक एव गुणस्यादित्यादिरीत्यावारणसंभवात् ।

(आक्षेपभाष्यम्)

अथ वृद्धिग्रहणं किमर्थम् ? ॥

(प्रत्याक्षेपभाष्यम्)

किं विशेषेण वृद्धिग्रहणं चोद्यते न पुनर्गुणग्रहणमपि । यदि किंचिद्गुणग्रहणस्य प्रयोजनमस्ति, वृद्धिग्रहणस्यापि तद्भवितुमर्हति । को वा विशेषः ? ॥

(प्रत्याक्षेपसमाधानभाष्यम्)

अयमस्ति विशेषः । गुणविधौ न क्वचित्स्थानी निर्दिश्यते, तत्रावश्यं स्थानिनिर्देशार्थं गुणग्रहणं कर्तव्यम् । वृद्धिविधौ पुनः सर्वत्रैव स्थानी निर्दिश्यते "अचोञ्णिति" "अतउपधायाः" "तद्धितेष्वचामादेः" इति॥

(समाधानभाष्यम्)

अत उत्तरं पठति—

(सिद्धान्तिसमाधानवार्तिकम्)

॥ वृद्धिग्रहणमुत्तरार्थम् ॥

(भाष्यम्)

वृद्धिग्रहणं क्रियते किमर्थम् ? ॥ उत्तरार्थम् । "क्ङिति" इति प्रतिषेधं वक्ष्यति । स वृद्धेरपि यथा स्यात् ॥

(पूर्वपक्षभाष्यम्)

कश्चेदानीं क्ङित्प्रत्ययेषु वृद्धेः प्रसङ्गः । यावता "ञ्णिति" इत्युच्यते ? ॥

(सिद्धान्तसमाधानवार्तिकम्)

॥ तच्च मृज्यर्थम् ॥

(भाष्यम्)

मृजेर्वृद्धिरविशेषेणोच्यते । सा क्ङिति मा भूत् मृष्टः मृष्टवानिति ॥

(सिद्धान्तिसमाधानान्तरवार्तिकम्)

॥ इहार्थं चापि ॥

(भाष्यम्)

इहार्थं चापि मृज्यर्थं वृद्धिग्रहणं कर्तव्यम् । मृजेर्वृद्धिरविशेषेणोच्यते सा-इको यथास्यात्, अनिको मा भूदिति ॥

(अन्यथोपपत्तिवार्तिकम्)

॥ मृज्यर्थमितिचेद्योगविभागात्सिद्धम् ॥

(व्याख्याभाष्यम्)

मृज्यर्थमितिचेद्योगविभागः करिष्यते — "मृजेर्वृद्धिरचः" । ततः "ञ्णिति" ञिति णिति च वृद्धिर्भवति 'अचः' इत्येव ॥

(अन्यथोपपत्तिबाधकभाष्यम्)

यद्यचोवृद्धिरुच्यते, 'न्यमार्ट्' अटोऽपि वृद्धिः प्राप्नोति ॥

( अन्यथोपबाधकवार्तिकम् )

॥ अटि चोक्तम् ॥

( भाष्यम् )

किमुक्तम् ? ॥ 'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवति' इति ॥

( सिद्धान्तवार्तिकम् )

॥ वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात् ॥

[ तस्मादिग्लक्षणा वृद्धिः ॥ ]

( भाष्यम् )

वृद्धेस्तु प्रतिषेधो नोच्यते । किं कारणम् ? । इक् प्रकरणात् । इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैवं सति मृजेरिग्लक्षणा वृद्धिर्भवति । तस्मान्मृजेरिग्लक्षणा वृद्धिरेषितव्या ॥

( इक्परिभाषानुपस्थितिसूचकभाष्यम् )

एवं तर्हि—इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते—परिमृजन्ति परिमार्जन्ति परिमृजन्तु परिमार्जन्तु परिममृजतुः परिममार्जतुरित्याद्यर्थम् ॥ तदिहापि साध्यम् । तस्मिन्साध्ये योगविभागः करिष्यते—"मृजेर्वृद्धिरचो" भवति ॥ ततः "अचि ङ्किति" अजादौ च ङ्किति मृजेर्वृद्धिर्भवति । परिमार्जन्ति परिमार्जन्तु परिममार्जतुः ॥ किमर्थमिदम् ? । नियमार्थम्, अजादावेवक्किति नान्यत्र ॥ क्वान्यत्र मा भूत् ? ॥ मृष्टः मृष्टवानिति ॥ ततो "वा" वाचि ङ्किति मृजेर्वृद्धिर्भवति । परिमृजन्ति परिमार्जन्ति परिममृजतुः परिममार्जतुरिति

( इक्परिभाषोपस्थितिसूचकभाष्यम् )

इहार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्तव्यम् । सिचिवृद्धिरविशेषेणोच्यते सेको यथा स्यात्, अनिको मा भूदिति ॥

( इक्परिभाषानुपस्थितिभाष्यम् )

कस्य पुनरनिकः प्राप्नोति ? ॥ अकारस्य । अचिकीर्षीत् अजिहीर्षीत् ॥

( इक्परिभाषानुपस्थितिभाष्यम् )

नैतदस्ति । लोपोऽत्र बाधको भविष्यति ॥

( इक्परिभाषोपस्थितिभाष्यम् )

आकारस्य तर्हि प्राप्नोति–अयासीत् अवासीत् ॥

( इक्परिभाषानुपस्थितिभाष्यम् )

नास्त्यत्र विशेषः सत्यां वृद्धावसत्यां वा ।

( इक्परिभाषाउपस्थितिभाष्यम् )

सन्ध्यक्षरस्य तर्हि प्राप्नोति ॥

( इक्परिभाषानुपस्थितिभाष्यम् )

नैव सन्ध्यक्षरमन्त्यमस्ति ॥

( इक्परिभाषाउपस्थितिभाष्यम् )

ननु चेदमस्ति ढलोपे कृते उदवोढाम् उदवोढेति ॥

( इक्परिभाषाअनुपस्थितिभाष्यम् )

नैतदस्ति । असिद्धो ढलोपः । तस्यासिद्धत्वान्नैतदन्त्यं भवति ॥

( इक्परिभाषाउपस्थितिभाष्यम् )

व्यञ्जनस्य तर्हि प्राप्नोति अभैत्सीत् अच्छैत्सीत् ॥

( इक्परिभाषाअनुपस्थितिभाष्यम् )

हलन्तलक्षणा वृद्धिर्बाधिका भविष्यति ॥

( इक्परिभाषाउपस्थितिभाष्यम् )

यत्र तर्हि सा प्रतिषिध्यते– " नेटि " इति अकोषीत् अमोषीत् ॥

( इक्परिभाषाअनुपस्थितिभाष्यम् )

सिचिवृद्धेरप्येष प्रतिषेधः ॥ कथम् ? ॥ लक्षणं हि नाम ध्वनति भ्रमति मुहूर्तमपि नावतिष्ठते ॥

( इक्परिभाषानुपस्थितिभाष्यम् )

अथवा "सिचिवृद्धिःपरस्मैपदेषु" इति सिचि वृद्धिः प्राप्नोति। तस्या हलन्तलक्षणा वृद्धिर्बाधिका। तस्या अपि "नेटि" इति प्रतिषेधः॥

( इक्परिभाषोपस्थितिभाष्यम् )

अस्ति पुनः क्वचिदन्यत्रापि अपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवति?॥

( इक्परिभाषानुपस्थितिभाष्यम् )

अस्तीत्याह, सुजाते अश्व सूनृते, अध्वर्यो अद्रीभिः सुतम्, शुक्रं ते अन्यदिति। पूर्वरूपे प्रतिषिद्धे अयादयोऽपि न भवन्ति॥

( प्रयोजनान्तरभाष्यम् )

उत्तरार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्तव्यम्। सिचि वृद्धिरविशेषेणोच्यते सा ङ्किति मा भूत्। न्यनुवीत् न्यधुवीत्॥

( प्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम्। अन्तरङ्गत्वादत्रोवङादेशे कृते अनन्त्यत्वाद्वृद्धिर्न भविष्यति॥

( सिद्धान्तभाष्यम् )

यदि तर्हि सिच्यन्तरङ्गं भवति—अकार्षीत् अहार्षीत्, गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति॥

( पूर्वपक्षिभाष्यम् )

मा भूदेवम्। "हलन्तस्य" इत्येवं भविष्यति॥

( दूषणभाष्यम् )

इह तर्हि—न्यस्तारीत् व्यदारीत्। गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति। हलन्तलक्षणायाश्च "नेटि" इति प्रतिषेधः॥

( दूषणनिराकरणभाष्यम् )

मा भूदेवम् । " ल्वान्तस्य " इत्येवं भविष्यति ॥

( दूषणभाष्यम् )

इह तर्हि अलावीत् अपावीत् । गुणे कृतेऽवादेशे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति । हलन्तलक्षणायाश्च "नेटि" इति प्रतिषेधः ।

( दूषणनिराकरणभाष्यम् )

मा भूदेवम् । " ल्वान्तस्य " इत्येवं भविष्यति ॥

( निराकरणबाधितभाष्यम् )

" ल्वान्तस्य " इत्युच्यते, न चेदं ल्वान्तम् ॥

( निराकरणसाधकभाष्यम् )

" ल्वान्तस्य " इत्यत्र वकारोऽपि निर्दिश्यते ॥ किं वकारो न श्रूयते ? ॥ लुप्तनिर्दिष्टो वकारः ॥

( निराकरणबाधितभाष्यम् )

यद्येवम्–मा भवानवीत्, मा भवान् मवीद् अत्रापि प्राप्नोति ॥

( निराकरणसाधकभाष्यम् )

अविमव्योर्नेति वक्ष्यामि ॥

( आक्षेपभाष्यम् )

तद्वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् । णिश्विभ्यां तौ निमातव्यौ ॥ यद्यप्येतदुच्यते । अथवैतर्हि णिश्व्योः प्रतिषेधो न वक्तव्यो भवति । गुणे कृते अयादेशे च यान्तानां नेत्येव प्रतिषेधो भविष्यति ॥

( भाष्यम् )

एवं तर्हि- आचार्यप्रवृत्तिर्ज्ञापयति- न सिच्यन्तरङ्गं भवति इति । यदयम् "अतो हलादेर्लघोः" इत्यकारग्रहणं करोति ॥ कथं कृत्वा ज्ञापकम् ? ॥ अकारग्रहणस्यैतत्प्रयोजनम् । इह मा भूत्-अकोषीत् अमोषीत् । यदि सिच्यन्तरङ्गं स्यात्, अकारग्रहणमनर्थकं स्यात् । गुणे कृते अलघूपधत्वाद्वृद्धिर्न भविष्यति । पश्यति त्वाचार्यो 'न सिच्यन्तरङ्गं भवति' इति ततोऽकारग्रहणं करोति ॥

( ज्ञापकनिराकरणभाष्यम् )

नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् ॥ किम् ? ॥ यत्र गुणः प्रतिषिध्यते तदर्थमेतत्स्यात् न्यकुटीत् न्यपुटीत् ॥

( ज्ञापकान्तरभाष्यम् )

यत्तर्हि णिश्व्योः प्रतिषेधं शास्ति । तेन नेहान्तरङ्गमस्ति-इति दर्शयति ॥

( पूर्वोक्तज्ञापकस्थिरीकरणभाष्यम् )

यच्च करोत्यकारग्रहणं लघोरिति कृतेऽपि ॥

( सिद्धान्तवार्तिकोपसंहार )

॥ तस्मादिग्लक्षणा वृद्धिः ॥

( भाष्यम् )

तस्मादिग्लक्षणा वृद्धिरास्थेया ॥

अथ-ओर्गुण इत्यादौ क्वचिदेव स्थानिनिर्देशे सर्वत्र गुणविधौ स्थानिनिर्देशार्थमिकोगुणवृद्धीति सुत्रे गुणग्रहणस्यावश्यकत्वेऽपि, वृद्धिग्रहणं व्यर्थम् । "अचोञ्णिति," "अत उपधाया" इत्यादिवृद्धिविधौ सर्वत्र स्थानिनिर्देशसत्वात् । न च मृजेर्वृद्धिरित्यत्र-इक इत्युपस्थित्यर्थं वृद्धिग्रहणम् । अत एव मृष्ट इत्यत्र व्यञ्जनस्य वृद्धिर्न ।

अस्या इग्लक्षणसंपत्याचात्रङ्क्तिचेति निषेधसिद्धिरिति वाच्यम् । मृजेर्वृद्धिरचः, ततोऽञ्णितीति योगभेदेन मृष्ट इत्यत्र व्यञ्जनस्य वृद्धिवारणत्वसंभवात् । परिमृजन्ति परिमार्जन्तीत्यादि द्विविधरूपसिद्ध्यर्थं मृजेर्वृद्धिरचः ततोऽचिङ्क्ति, मृजेर्वृद्धिर्भवतीत्यर्थः । परिमार्जन्ति, नियमार्थमिदम् । अजादावेव ङ्क्ति नान्यत्र मृष्ट इत्यादौ । ततो वा । वाचिङ्क्ति मृजेर्वृद्धिर्भवतीत्यर्थः । परिमृजन्ति परिमार्जन्ति, अनेनापि मृष्ट इत्यादौ वृध्यभावसिद्धिरिति चेत् । न । सिचि वृद्धिरित्यादौ इक इत्युपस्थित्यर्थं तस्यावश्यकत्वात् । अत एव अभैत्सीदित्यत्र व्यञ्जनस्य न वृद्धिः । अचिकीर्षीत् अयासीत् उदवोढामिति तु, नेग्ग्रहणफलम् । आद्ये अतो लोपेन बाधात् । द्वितीये फलाभावात् । तृतीये, ढलोपस्यासिद्धत्वेन सन्ध्यक्षरस्यान्त्यत्वाभावात् । नचाभैन्त्सीदित्यत्र हलन्तलक्षणावृद्धिर्बाधिका । नेटीत्येतद्विषये ( तत्प्रतिषेधे ) असोपीदित्यादौ तत्फलस्य सत्वात् । यदि तु नेटीति सिचिवृद्धेरपि निषेधः यदि वा सिचिवृद्धिरिति वृद्धिः प्राप्ता, तस्या हलन्तलक्षणा वृद्धिर्बाधिका ; तस्याश्च नेटीति निषेधात् भ्रष्टावसरन्यायेन पुनः सिचिवृद्धेरप्राप्तेरदोषात् । अत एव सुजाते अश्वसूनृते इत्यादौ पूर्वरूपे प्रतिषिद्धे अयादयोपि न भवन्तीत्युच्यते, तर्हि न्युनुवीत् इत्यादौ ङ्क्तिचेति निषेधसिद्धये सिचिवृद्धिरित्यस्येग्लक्षणसंपत्यर्थमिकोगुणेति सूत्रे वृद्धिग्रहणस्यावश्यकत्वात् । ननु न्यनुवीदित्यत्रान्तरङ्गत्वादवङादेशे कृते अनन्त्यत्वाद्वृद्धेरप्राप्तेः । सिचिवृद्धिरित्यत्र — इगुपस्थितेः फलाभावः । न च सिचि परतोऽन्तरङ्गशास्त्रप्रवृत्तिःस्वीकारे अकार्षीत् अलावीदित्यादौ — अन्तरङ्गत्वाद्गुणेरपरे, अवादेशे च कृते अन्तरङ्गत्वाद्वृद्धिर्नप्राप्नोतीति वाच्यम् । अतोल्रान्तस्येत्यनेन वृद्धिसिद्धेः । ल्रान्तेत्यत्र लोपोव्योर्वलीत्यनेन वकारप्रश्लेषात् मा भवानवीदित्यत्रतु अविमव्योर्नेति वचनस्वीकारेण — अदोषात् । अश्वैरित्यादौ — अन्तरङ्गत्वाद्गुणेऽयादेशे च यान्तत्वादेव वृद्धिनिषेधसिध्यात्र पक्षे णिश्विग्रहणाकरणेन तत्स्थाने

अविमव्योरिति पदद्वयकरणे गौरवाभावादितिचेत् । न । येननाप्राप्त-न्यायेन सिचि परतोऽन्तरङ्गोऽवङादेरप्रवृत्त्या न्यनुवीदित्यत्र ङ्क्ति चेति इग्लक्षण प्रतिषेधार्थं सिचि वृद्धिरित्यस्येग्लक्षणसंपत्तये वृद्धिग्रहणस्य फलसत्वात् । न्यायमूले न सिच्यन्तरङ्गे भवतीति वचनेन च णिश्विग्रहणस्य ज्ञापकत्वात् । एवमतो हलादेर्लघोरित्यत्र–अकारग्रहणमपि ज्ञापकम् । यदि सिच्यन्तरङ्गं स्यात् तर्हि–अन्तरङत्वादकोषीदित्यत्र गुणे कृते अलघूपधत्वादेव वृद्धेरप्राप्तेस्तद्व्यर्थं स्यात् । न च न्यकुटीदित्यत्र गाङकुटेति ङित्वेन गुणस्य निषेधे वृद्धिबाधनार्थमकारग्रहणमिति वाच्यम् । अन्तरङ्गत्वाद्वृद्धिं बाधित्वा प्रवृत्तगुणस्य निषेधेन भ्रष्टावसरन्यायेन पुनर्वृद्धेरप्राप्तेरदोषात् ।

(अथस्वतन्त्रविधित्वनिराकरणम्)

(आक्षेपवार्तिकम्)

॥ षष्ठयास्थाने योगत्वादिग्–निवृत्तिः ॥

(भाष्यम्)

षष्ठयास्थाने योगत्वात्सर्वेषामिकां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति दधि मधु ॥

(स्वतन्त्रत्वे दूषणभाष्यम्)

पुनर्वचनमिदानीं किमर्थं स्यात् ? ॥

(दूषणसमाधानवार्तिकम्)

॥ अन्यतरार्थं पुनर्वचनम् ॥

(भाष्यम्)

अन्यतरार्थमेतत्स्यात् । सार्वधातुकार्धधातुकयोर्गुण एवेति ॥

(आक्षेपवार्तिकम्)

॥ प्रसारणे च ॥

प्रसारणे च सर्वेषां यणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति–याता वाता ॥

( स्वातन्त्र्ये दूषणभाष्यम् )

पुनर्वचनमिदानीं किमर्थं स्यात् ? ॥

( स्वातन्त्र्यदूषणनिराकरणवार्तिकम् )

॥ विषयार्थं पुनर्वचनम् ॥

( भाष्यम् )

विषयार्थमेतत्स्यात्, वचिस्वापियजादीनां कित्येवेति ॥

( आक्षेपवार्तिकम् )

॥ उरण्रपरे च ॥

( भाष्यम् )

उरण्रपरे च सर्वेषामृकाराणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति–कर्तृ हर्तृ ॥

( सर्वाक्षेपनिराकरणसिद्धान्तवार्तिकम् )

॥ सिद्धंतुषष्ठ्यधिकारेवचनात् ॥

( भाष्यम् )

सिद्धमेतत् ॥ कथम् ? षष्ठ्यधिकारे इमे योगाः कर्तव्याः । एकस्तावत्क्रियते तत्रैव । इमावपि योगौ षष्ठ्यधिकारमनुवर्तिष्येते ॥

( भाष्यम् )

अथवा षष्ठ्यधिकारे इमौ योगावपेक्षिष्यामहे ॥

( समाधानान्तरभाष्यम् )

अथवेदं तावदयं प्रष्टव्यः– " सार्वधातुकार्धधातुकयोर्गुणो भवति " इतीह कस्मान्न भवति–याता वाता ? ॥ इदं तत्रापेक्षिष्यते– " इको गुणवृद्धि " इति ॥ यथैव तर्हि इदं तत्रापेक्षिष्यते, एवमिहापि तदपेक्षिष्यामहे " सार्वधातुकार्धधातुकयोः " इति ॥ गुणवृद्धी ॥ ३ ॥

नचेक इति स्थानषष्ठी स्थानीनिवृत्तिबाधिकेति, दधि मधु–इत्यादौ, इको निवृत्यापत्तिः । न च–सार्वधातुकार्द्धधातुकयोरिति व्यर्थम् । तयोः

परतो गुण एवेति नियमार्थं तत्सत्वात् । एवमिको गुणेत्यादीनां स्वातन्त्र्येण विधायकत्वे, तुल्यन्यायात् प्रसारणे, उरणरपरे च सर्वेषामृकाराणाञ्च निवृत्यापत्तिरिति वाच्यम् । सिद्धन्तु षष्ठ्यधिकारे वचनात्– इत्यनेन नैतत्स्वातन्त्र्येण विधायकम् । किन्तु यत्र स्थानषष्ठी तत्रैषामुपस्थानबोधनात् । तथा च सार्वधातुकार्द्धधातुकयोरित्यादौ इकइत्युपस्थितेरपेक्षया न त्वस्यस्वातन्त्र्यमिति सिद्धम् ॥

॥ इति श्रीमत्पतञ्जलिविरचिते महाभाष्ये
अर्थसंग्रहटीकायां तृतीयाह्निकं समाप्तम् ॥

---

॥ श्रीः ॥

# ॥ अथ चतुर्थाह्निकप्रारम्भः ॥

॥ न धातुलोप आर्धधातुके ॥ १।१।४ ॥ च. आ.

(आक्षेपभाष्यम्)

आर्द्धधातुकग्रहणं किमर्थम्? ॥

(समाधानभाष्यम्)

इह मा भूत्–लूञ् लविता लवितुम्, पूञ् पविता पवितुम् ॥

(आक्षेपभाष्यम्)

आर्द्धधातुक इति किमर्थम्? ॥

(समाधानभाष्यम्)

'त्रिधाबद्धो वृषभो रोरवीति' (ऋ. सं. ४।५८।३)

(आक्षेपभाष्यम्)

किं पुनरिदमार्द्धधातुकग्रहणं लोपविशेषणम्–'आर्द्धधातुकनिमित्ते लोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति । आहोस्वित्– गुणवृद्धिविशेषणमार्द्धधातुकग्रहणम् 'धातुलोपे सत्यार्द्धधातुकनिमित्ते ये गुणवृद्धि प्राप्नुतस्ते न भवतः इति? ॥

(विशेषप्रश्नभाष्यम्)

किं चातः? ॥

(विशेषदर्शनभाष्यम्)

यदि लोपविशेषणम्, उपेद्धः प्रेद्धः इत्यत्रापि प्राप्नोति । अथ गुणवृद्धिविशेषणम्, 'क्नोपयति' अत्रापि प्राप्नोति ॥

( उभयेष्टापत्तिभाष्यम् )

यथेच्छसि तथास्तु ॥

( प्रथमपक्षाङ्गीकारभाष्यम् )

अस्तु लोपविशेषणम् ॥

( आक्षेपभाष्यम् )

कथम् – उपेद्धः प्रेद्धः इति ? ॥

( समाधानभाष्यम् )

बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः ' असिद्धं बहिरङ्ग-मन्तरङ्गे ' ॥

( लाघवभाष्यम् )

यद्येवं नार्थो धातुग्रहणेन ॥

( आक्षेपभाष्यम् )

इह कस्मान्न भवति लूञ् लविता लवितुम् ? ॥

( समाधानभाष्यम् )

आर्द्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्द्धधातु-कनिमित्तो लोपः ॥

( द्वितीयपक्षस्वीकारभाष्यम् )

अथवा पुनरस्तु गुणवृद्धिविशेषणम् ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम् – क्नोपयतीत्यत्रापि प्राप्नोतीति ॥

( समाधानभाष्यम् )

नैष दोषः, निपातनात्सिद्धम् ॥ किं निपातनम् ? ॥ चेले क्नोपेः इति ॥

( अथ परिगणनभाष्यम् )

परिगणनं कर्तव्यम्

( परिगणनपूर्वपक्षिवार्तिकम् )

॥ यङ्यक्यवलोपे प्रतिषेधः ॥

(भाष्यम्)

यङ्यक्यलोपे प्रतिषेधो वक्तव्यः ॥ यङ् बेभिदिता मरीमृजः ॥ यक्-कुषुभिता मगधकः ॥ क्य-समिधिता दृषदकः ॥ वलोपे जीरदानुः ॥

(भाष्यम्)

किं प्रयोजनम् ? ॥

(परिगणनसाधकवार्तिकम्)

॥ नुम्लोपस्त्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम् ॥

(भाष्यम्)

नुम्लोपे स्त्रिव्यनुबन्धलोपे च प्रतिषेधो मा भूदिति ॥ नुम्लोपे-अभाजि, रागः, उपबर्हणम् ॥ स्त्रिवेः-आस्रेमाणम् ॥ अनुबन्धलोपे-लूञ् लविता लवितुम् ॥

(आक्षेपभाष्यम्)

यदि परिगणनं क्रियते, स्यदः प्रश्रथः हिमश्रथः इत्यत्रापि प्राप्नोति ॥

(समाधानभाष्यम्)

वक्ष्यत्येतत्-निपातनात्स्यदादिषु इति ॥

(आक्षेपभाष्यम्)

तत्तर्हि परिगणनं कर्तव्यम् ? ॥ न कर्तव्यम् ॥

(आक्षेपभाष्यम्)

नुम्लोपे कस्मान्न भवति ? ॥

(सिधान्तसमाधानवार्तिकम्)

इक्प्रकरणान्नुम्लोपे वृद्धिः ॥

(भाष्यम्)

इग्लक्षणयोर्गुणवृध्द्योः प्रतिषेधः । न चैषेग्लक्षणा वृद्धिः॥

(आक्षेपभाष्यम्)

यदीग्लक्षणयोर्गुणवृध्द्योः प्रतिषेधः 'स्यदः प्रश्रथः हिमश्रथः' इत्यत्र न प्राप्नोति । इह च प्राप्नोति-अवोदः एषः ओद्मः इति ॥

( सिद्धान्तसमाधानवार्तिकम् )

॥ निपातनात्स्यदादिषु ॥

( भाष्यम् )

निपातनात्स्यदादिषु प्रतिषेधो भविष्यति, न च भविष्यति ॥

( आक्षेपभाष्यम् )

यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, स्निह्यनुबन्धलोपे कथम् ? ॥

( सिद्धान्तसमाधानवार्तिकम् )

॥ प्रत्ययाश्रयत्वादन्यत्र सिद्धम् ॥

( भाष्यम् )

आर्द्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्द्धधातुकनिमित्तो लोपः ॥

( आक्षेपभाष्यम् )

यद्यार्धधातुकनिमित्ते लोपे प्रतिषेधः, 'जीरदानुः' (ऋ. सं. ५।८३।१ ) अत्र न प्राप्नोति ॥

( सिद्धान्तसमाधानवार्तिकम् )

॥ रक्वि ज्यः संप्रसारणम् ॥

( भाष्यम् )

नैतज्जीवे रूपम्, रक्ये तज्ज्यः संप्रसारणं भवति ॥

( एकदेशिकभाष्यम् )

यावता चेदानीं रकि, जीवेरपि सिद्धं भवति ॥

( पूर्वपक्षभाष्यम् )

कथमुपबर्हणम् ? ॥

( सिद्धान्तभाष्यम् )

बृहिः प्रकृत्यन्तरम् ॥

( आक्षेपभाष्यम् )

कथं ज्ञायते- बृहिः प्रकृत्यन्तरमिति ? ॥

( सिन्धान्तभाष्यम् )

अचीति हि लोप उच्यते, अनजादावपि दृश्यते–निवृह्यते। अनिटीति चोच्यते, इडादावपि दृश्यते निबर्हिता निबर्हितुमिति । अजादावपि न दृश्यते बृंहयति बृंहकः ॥

( उपसहारभाष्यम् )

तस्मान्नार्थः परिगणनेन ॥

( समाधानभाष्यम् )

नैष दोषः । धातुलोप इति नैवं विज्ञायते–धातोर्लोपो धातुलोपो धातुलोप इति ॥ कथं तर्हि ? धातोर्लोपो यस्मिंस्तदिदं धातुलोपे इति ॥

( उपसंहारभाष्यम् )

तस्मादिग्लक्षणा वृद्धिः ॥

॥ इतिपरिगणनाधिकरणम् ॥

। अथेग्लक्षणत्वेदोषनिराकरणाधिकरणम् ।

( आक्षेपभाष्यम् )

यदि तर्हीग्लक्षणयोर्गुणवृध्द्योः प्रतिषेधः, 'पापचकः पापठकः, मगधकः, दृषदकः,' अत्र न प्राप्नोति ॥

( सिद्धान्तसमाधानवार्तिकम् )

॥ अल्लोपस्यस्थानिवत्वात् ॥

( भाष्यम् )

अकारलोपे कृते तस्य स्थानिवत्वाद्गुणवृद्धी न भविष्यतः ॥

॥ इतीग्लक्षणत्वे दोषनिराकरणम् ॥

( सिद्धान्तवार्तिकम् )

॥ अनारम्भो वा ॥

( भाष्यम् )

अनारम्भो वा पुनरस्य योगस्य न्याय्यः ॥

( आक्षेपभाष्यम् )

कथं 'बेभिदिता मरीमृजकः कुषुभिता समिधिता' इति ? ॥

( समाधानभाष्यम् )

अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद्गुणवृद्धी न भविष्यतः ॥

( आक्षेपभाष्यम् )

यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः। क्व च स्थानिवद्भावो नास्ति ? ॥ यत्र हलचोरादेशः, लोलुवः पोपुवः मरीमृजः सरीसृप इति ॥

( समाधानभाष्यम् )

अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद्गुणवृद्धी न भविष्यतः ॥

( समाधानबाधकभाष्यम् )

लुकि कृते न प्राप्नोति ॥

( समाधानसाधकभाष्यम् )

इदमिह सम्प्रधार्यम्–लुक् क्रियतामल्लोप इति । किमत्र कर्तव्यम् ? ॥ परत्वादल्लोपः ॥

( समाधानबाधकभाष्यम् )

नित्यो लुक् । कृतेऽप्यल्लोपे प्राप्नोति, अकृतेऽपि प्राप्नोति ॥

( समाधानसाधकभाष्यम् )

लुगप्यनित्यः । कथम् ? ॥ अन्यस्य कृतेऽल्लोपे प्राप्नोति, अन्यस्याकृते ॥ "शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति" ॥

( समाधानबाधकभाष्यम् )

अनवकाशस्तर्हि लुक् ॥

( समाधानसाधकभाष्यम् )

सावकाशो लुक् । कोऽवकाशः ? अवशिष्टः ॥

(अभ्युपेत्यसमाधानभाष्यम्)

अथापि कथंचिदनवकाशो लुक् स्यादेवमपि न दोषः। अल्लोपे योगविभागः करिष्यते- "अतो लोपः" ततो "यस्य" यस्य च लोपो भवति। अत इत्येव॥ किमर्थमिदम्?॥ ततो "हलः" हल उत्तरस्य यस्य च लोपो भवतीति॥

(आक्षेपभाष्यम्)

इहापि तर्हि परत्वाद्योगविभागाद्वा लोपो लुकं बाधेत- कृष्णो नोनाव वृषभो यदीदम्। (ऋ. सं. १।७९।२) नोनूयतेर्नोनाव॥

(समाधानभाष्यम्)

समानाश्रयो लुग्लोपेन बाध्यते॥ कश्च समानाश्रयः?॥ यः प्रत्ययाश्रयः, अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति॥

(आक्षेपभाष्यम्)

कथम्-स्यदः प्रश्रथः हिमश्रथः "जीरदानुः" निकुचित इति?

(समाधानवार्तिकभाष्यम्)

॥ उक्तं शेषे॥

(भाष्यम्)

किमुक्तम्?॥ निपातनात्स्यदादिषु। प्रत्ययाश्रयत्वादन्यत्र सिद्धम्। रकिज्यः सम्प्रसारणम्-इति॥ निकुचितेऽप्युक्तम्। किम्?॥ सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति॥

न धात्विति—धात्वंशलोपनिमित्तके आर्द्धधातुके परे इग्लक्षणे गुणवृद्धी न स्तः। लूञ् लविता। अत्रार्द्धधातुकनिमित्तत्वाभावाद्धातुसम्बधित्वाभावाच्च न निषेधः। न च-उपेद्धः प्रेद्ध इत्यत्र निषेधः प्राप्नोति-गुणस्यार्द्धधातुकनिमित्तत्वाभावात्। अथवा बहिरङ्ग परिभाषया गुणस्यासिद्धत्वान्ननिषेधः। क्नोपयतीत्यत्र "चेलेक्नोपे"

इति निर्देशान्ननिषेधः । 'यङ्यक् क्यवलोपे' एव निषेधः । तेन नुम्लोपे स्त्रिव्यनुबन्धलोपे च प्रतिषेधो नेति केचित् । वस्तुतः इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधात् नात्र दोषः । स्यदः प्रश्रयः, इत्यादौ वृद्धिस्तु न । "स्यदोजवे" इत्यादि निपातनात् । न च जीरदानुरित्यत्र गुणापत्तिः । नैतज्जीवे रूपम् । रक्षिउयः सम्प्रसारणम् । उपबर्हणमिति तु बृहिः प्रकृत्यन्तरम् । तस्य रूप भवति तत् । अत एव निबृह्यते, निबर्हिता, निबर्हितुमित्यादि रूपाणि सिद्ध्यन्ति । बृहेरच्यनिटीत्यस्याप्राप्तेः । पापचकः, दृपदक इत्यत्र अल्लोपस्य स्थानिवत्वेन गुणवृद्ध्योरप्राप्तेः । वस्तुतस्त्वेतत्सूत्रं निष्फलत्वान्नारंभणीयम् । बेभिदिता, समिधितेत्यादौ अकारलोपे कृते तस्य स्थानिवद्भावाद्गुणवृद्ध्योरप्राप्तेः । न च लोलुवः मरीमृज इत्यादौ विशिष्टस्य लुकापहारात् स्थानिवद्भावाप्राप्त्या गुणवृद्ध्यापत्तिरिति वाच्यम् । अत्रापि अकारलोपे कृते पश्चाद्यकारलोपेन दोषाभावात् । न च तक्रकौण्डिण्यन्यायेन लोपं बाधित्वा लुगिति वाच्यम् । यस्यहल इत्यत्र यस्येति योगविभागे अत इत्यस्यानुवृत्त्या लुगपवाद लोपस्यैवापवादत्वात् । नानूयतेर्नोनाव इत्यादौ तु अनैमित्तिकेन अन्तरङ्गत्वाल्लुक् प्राप्तेः । योगविभागादतोलोपस्तु अच्प्रत्ययनिमित्तक यङ्लुक एव । सूत्राभावे सन्निपातपरिभाषयैव निकुचितेत्यत्र दोषाभावात् ॥

( परिभाषासूत्रम् )

## क्क्ङिति च ॥ १।१।५ ॥

( आक्षेपवार्तिकम् )

**क्क्ङितिप्रतिषेधे तन्निमित्तग्रहणम् ॥ [ उपधारोरवीत्यर्थम् ]**

( आक्षेपभागव्याख्याभाष्यम् )

**क्क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्तव्यम् । क्क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति वक्तव्यम् ॥**

( भाष्यम् )

किं प्रयोजनम् ? ॥

( वार्तिकम् )

॥ उपधारोरवीत्यर्थम् ॥

उपधार्थं रोरवीत्यर्थं च ॥ उपधार्थं तावत्–भिन्नः भिन्नवानिति ॥ किं पुनः कारणं न सिद्ध्यति ? ॥ क्ङितीत्युच्यते । यत्र क्ङित्यनन्तरो गुणभावीगस्ति तत्रैव स्यात्–चितम् स्तुतम् । इह तु न स्यात्–भिन्नः भिन्नवानिति ?

( प्रथमप्रयोजनबाधकभाष्यम् )

ननु च यस्य गुण उच्यते, तं क्ङित्परत्वेन विशेषयिष्यामः । पुगन्तलघूपधस्य चाङ्गस्य गुण उच्यते । भिन्नं, तच्चात्र क्ङित्परम् ॥

( प्रथमप्रयोजनसाधकभाष्यम् )

पुगन्तलघूपधस्येति नैवं विज्ञायते–पुगन्तस्याङ्गस्य लघूपधस्य चेति ॥ कथं तर्हि ? ॥ पुकि अन्तः पुगन्तः । लघ्वी उपधा लघूपधा । पुगन्तश्च लघूपधा च पुगन्तलघूपधं पुगन्तलघूपधस्येति ॥ अवश्यं चैतदेवं विज्ञेयम् । अङ्गविशेषणे हि सतीहापि प्रसज्येत–भिनत्ति छिनत्तीति ॥

रोरवीत्यर्थं च ' त्रिधा बद्धो वृषभो रोरवीति ॥

( आक्षेपभाष्यम् )

यदि तन्निमित्तग्रहणं क्रियते, श्चङन्ते दोषः, रियति पियति धियति प्रादुद्रुवत् प्रासुस्रुवत् अत्र न प्राप्नोति ॥

( सिद्धान्तसमाधानवार्तिकम् )

श्चङन्तस्यान्तरङ्गलक्षणत्वात्सिद्धम् ॥

( भाष्यम् )

अन्तरङ्गलक्षणत्वादत्रेयङुवङोः कृतयोरनुपधात्वाद्गुणो न भविष्यति ॥

( तन्निमित्तग्रहणस्य निर्दोषतोपसंहारभाष्यम् )

एवं क्रियते चेदं तन्निमित्तग्रहणम् । न च कश्चिद्दोषो भवति ॥

( फलान्तरभाष्यम् )

इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि हतो हथः उपोयते औयत लौयमानिः नेनिक्त इति ॥

( फलान्तरप्रत्याख्यानभाष्यम् )

नैतानि सन्ति प्रयोजनानि । इह तावत्-हतो हथ इति । प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुम् । अत्र च धातूपदेशावस्थायामेवाकारः ॥

( भाष्यम् )

इह चोपयते औयत लौयमानिः पौयमानिरिति । बहिरङ्गे गुणवृद्धी, अन्तरङ्गः प्रतिषेधः । असिद्धं बहिरङ्गमन्तरङ्गे ॥

( भाष्यम् )

नेनिक्ते, इति । परेण रूपेण व्यवहितत्वान्न भविष्यति ॥

( अथ तन्निमित्तग्रहणप्रत्याख्यानभाष्यम् )

उपधार्थेन तावन्नार्थः । धातोरिति वर्तते । धातुं क्ङित्परत्वेन विशेषयिष्यामः ॥

( आक्षेपभाष्यम् )

यदि धातुर्विशेष्यते, विकरणस्य न प्राप्नोति-चिनुतः सुनुतः लुनीतः पुनीत इति ॥

( समाधानभाष्यम् )

नैष दोषः । विहितविशेषणं धातुग्रहणम्-धातोर्यो विहित इति ॥

( आक्षेपभाष्यम् )

धातोरेव तर्हि न प्राप्नोति ॥

( समाधानभाष्यम् )

नैवं विज्ञायते धातोर्विहितस्य क्क्ङितीति ॥ कथं तर्हि ? । धातोर्विहिते क्क्ङितीति ॥

( समाधानान्तरभाष्यम् )

अथवा कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यम् " पुगन्तलघूपधस्य गुणो भवति " इत्युपस्थितमिदं भवति क्क्ङिति न इति ॥

( समाधानान्तरभाष्यम् )

अथवा यदेतस्मिन्योगे क्क्ङिद्ग्रहणं क्रियते तदनवकाशम् । तस्यानवकाशत्वाद् गुणवृद्धी न भविष्यतः ॥

( समाधानान्तरभाष्यम् )

अथवाचार्यप्रवृत्तिर्ज्ञापयति—भवत्युपधालक्षणस्य गुणस्य प्रतिषेधः इति । यदयं " त्रसिगृधिधृषिक्षिपेः क्नुः " " इकोझल् हलन्ताच्च " क्नुसनौ कितौ करोति ॥ कथं कृत्वा ज्ञापकम् ? ॥ कित्करण एतत्प्रयोजनम्—गुणः कथं न स्यात् इति । यदि चात्र गुणप्रतिषेधो न स्यात् कित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यो भवत्युपधालक्षणस्यापि गुणस्य प्रतिषेध इति ततः क्नुसनौ कितौ करोति ॥

( द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् )

रोरवीत्यर्थेनापि नार्थः क्क्ङितीत्युच्यते, न चात्र क्क्ङितं पश्यामः ॥

( आक्षेपभाष्यम् )

प्रत्ययलक्षणेन प्राप्नोति ॥

( समाधानभाष्यम् )

" न लुमता तस्मिन् " इति प्रत्ययलक्षणप्रतिषेधः । अथापि " नलुमताङ्गस्य " इत्युच्यते, एवमपि न दोषः ॥ कथम् ? । न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते ॥ किं

तर्हि ? ॥ योऽसौ लुमता लुप्यते तस्मिन्यदङ्गं तस्य यत्कार्यं तन्न भवतीति ॥ अथाप्यङ्गाधिकारः प्रतिनिर्दिश्यते । एवमपि न दोषः ॥ कथम्? ॥ "कार्यकालं संज्ञापरिभाषम्" यत्र कार्यं तत्र द्रष्टव्यम् । सार्वधातुकार्धधातुकयोर्गुणो भवति इत्युपस्थितमिदं भवति क्ङिति न इति ॥

( समाधानान्तरभाष्यम् )

अथवा छान्दसमेतत्। दृष्टानुविधिश्छन्दसि भवति । अथवा बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः । " असिद्धं बहिरङ्गमन्तरङ्गे " ॥ अथवा पूर्वस्मिन्योगे यदार्द्धधातुकग्रहणं, तदनवकाशम् । तस्यानवकाशत्वाद् गुणो भविष्यति ॥

( आक्षेपभाष्यम् )

इह कस्मान्न भवति–' लैगवायनः ' ' कामयते ' ? ॥

( सिद्धान्तसमाधानवार्तिकम् )

तद्धितकाम्योरिक्प्रकरणात् ॥

( भाष्यम् )

इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैते इग्लक्षणे ॥

( आक्षेपवार्तिकम् )

लकारस्य ङित्वादादेशेषु स्थानिवद्भावप्रसङ्गः ॥

( भाष्यम् )

लकारस्य ङित्वादादेशेषु स्थानिवद्भावः प्राप्नोति–अचिनवम्, असुनवम्, अकरवम् ॥

( एकदेशिसमाधानवार्तिकम् )

लकारस्य ङित्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात्सिद्धम् ॥

( भाष्यम् )

यदयं यासुटो ङिद्वचनं शास्ति तज्ज्ञापयत्याचार्यो न ङिदादेशा ङितो भवन्तीति ॥

(आक्षेपभाष्यम्)

**यद्येतज्ज्ञाप्यते, कथं "नित्यं ङितः" इतश्च इति?॥**

(समाधानभाष्यम्)

**ङितो यत्कार्यं तद्भवति, ङिति यत्कार्यं तन्न भवतीति॥**

(आक्षेपभाष्यम्)

**किं वक्तव्यमेतत्?**

(समाधानभाष्यम्)

**न हि।**

(आक्षेपभाष्यम्)

**कथमनुच्यमानं गंस्यते?॥**

(समाधानभाष्यम्)

**यासुट एव ङिद्वचनात्। अपर्याप्तश्चैव हि यासुट् समुदायस्य ङित्वे, ङितं चैनं करोति। तस्यैतत्प्रयोजनं ङितो यत्कार्यं तद्यथास्यात्, ङिति यत्कार्यं तन्माभूदिति॥**

क्ङितिचेति- अत्र तन्निमित्तग्रहणं कर्तव्यम्। अन्यथा तस्मिन्निति परिभाषया चितं स्तुतमित्यादावेवाव्यवहितपूर्वे निषेधस्यात्। भिन्नेत्यादौ इकारस्याव्यवहितपूर्वत्वाभावान्निषेधो न स्यात्। रोरवीत्यत्र ङिद्व्यवहितपूर्वत्वेन गुणनिषेधः स्यात्। रियति, प्रादुद्रुवदित्यादौ तु लघुपधगुणादन्तरङ्गत्वादियङुवङोः कृतयोरनुपधत्वान्न गुणापत्तिदोषः। क्वचित्तु तन्निमित्तस्य प्रयोजनानि हतः उपोयते, औयत लौयमानिः, नेनिक्ते इति वदन्ति। तन्न। हत इत्यत्र धातूपदेशावस्थायामेव-अकारसत्वात् प्रतिषेधेन तन्निवृत्तेरयोगात्। प्रसक्तस्यैव प्रतिषेधेन निवृत्तेः कर्तुं शक्यत्वात्। नेनिक्ते इत्यत्र धातुना व्यवहितत्वान्निषेधाप्राप्तेः। अन्यत्र बहिरङ्गपरिभाषया गुणवृध्योर्निषेधायोगात्। वस्तुतस्तु निमित्तग्रहणं व्यर्थम्। रोरवीत्यत्र छान्दसत्वान्निषेधाप्रवृत्तेः। अथवा बहिरङ्गो गुणः अन्तरङ्गप्रतिषेध इति गुणस्यासिद्धत्वेन प्रतिषेधायोगात्। अथवा न धातुलोप सूत्रे आर्द्धधातुकग्रहणस्य रोरवीत्येव फलमुक्तम्। तत्र क्ङितिचेत्यनेन निषेधः स्यात्तर्हि, आर्द्धधातुकग्रहणं

व्यर्थमेव स्यात् । तत्सामर्थ्यात्सूत्रान्तरप्राप्तोऽपि निषेधो बाध्यते । भिन्न इत्याद्यर्थमपि तन्निमित्तग्रहणम् । क्ङितिचेत्यस्य परिभाषात्वेन कार्यकालपक्षे पुगन्तेत्यत्रोपस्थित्या सार्वधातुकार्धधातुकयोरित्यस्यैव क्ङिद्भिन्नसार्वधातुकपरतयात्र गुणप्राप्तिः । अथवा प्रतिषेधस्य यावत्प्रतिषेध्यविषयकतया पुगन्त इत्येतद्विषयकस्य क्ङितिचेत्यस्य वैयर्थ्येन येन नाव्यवहितन्यायेन सार्वधातुकार्द्धधातुकयोरिव क्ङितिचेत्यस्यापि व्यवहिते प्रवृत्तिः सुलभा । यद्वा क्नोः कित्वसामर्थ्यादुपधालक्षणस्यापि गुणस्य क्ङितिचेति निषेधः । अयं च इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः तेन लैगवायनः . कामयत इत्यत्र न निषेधः। न चाचिनवमित्यादौ स्थानिवद्भावेन लकारवृत्तिङित्वादादेशस्य गुणनिषेधापत्तिरिति वाच्यम्। लिङ्वृत्तिङित्वातिदेशेनैव सिद्धेर्यासुटो ङित्करणसामर्थ्याज्ज्ञापकस्य सजातीयविषयत्वात् ङिति परतो यत्कार्यं तत्र कर्तव्ये ङिदादेशा ङितो न भवन्तीति ज्ञापनात् ॥

( परिभाषासूत्रम् )

दीधीवेवीटाम् ॥ १।१।६॥

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

( समाधानभाष्यम् )

**गुणवृद्धी मा भूतामिति । आदीध्यनम्, आदीध्यकः । आवेव्यनम् आवेव्यकः ॥**

( सूत्रप्रत्याख्यानभाष्यम् )

**अयं योगः शक्योऽकर्तुम् कथम् ? ॥**

( सिद्धान्तवार्तिकम् )

**दीधीवेव्योश्छन्दोविषयत्वात् दृष्टानुविधित्वाच्च छन्दसश्छन्दस्य दीधेददीधयुरिति च गुणदर्शनादप्रतिषेधः ॥**

( भाष्यम् )

**दीधीवेव्योश्छन्दोविषयत्वात् । दीधीवेव्यौ छन्दोवि-**

षयौ। दृष्टानुविधित्वाच्छन्दसः। दृष्टानुविधिश्च छन्दसि भवति। अदीधेददीधयुरिति च गुणस्य दर्शनादप्रतिषेधः। अनर्थकः प्रतिषेधः अप्रतिषेधः।

प्रजापतिर्वै यत्किंचन मनसादीधेत्। (ऋ. स.) अदीधयुर्दाशराज्ञे वृतासः। (ऋ. सं.)

(आक्षेपभाष्यम्)

भवेदिदं युक्तमुदाहरणम्—अदीधेदिति। इदंत्वयुक्तम्—अदीधयुरिति। अयं जुसि गुणः प्रतिषेधविषय आरभ्यते, स यथैव क्ङिति न इत्येतं प्रतिषेधं बाधते, एवमिममपि बाधेत॥

(समाधानभाष्यम्)

नैष दोषः, जुसि गुणः प्रतिषेधविषय आरभ्यमाणस्तुल्यजातीयं प्रतिषेधं बाधते॥ कश्च तुल्यजातीयः प्रतिषेधः?॥ यः प्रत्ययाश्रयः। प्रकृत्याश्रयश्चायम्॥

(समाधानान्तरभाष्यम्)

अथवा—येन नाप्राप्ते तस्य बाधनं भवति। न चाप्राप्ते 'क्ङिति' नेत्येतस्मिन्प्रतिषेधे जुसि गुण आरभ्यते। अस्मिन्पुनः प्राप्ते चाप्राप्ते च॥

(आक्षेपभाष्यम्)

यदि तर्ह्ययं योगो नारभ्यते, कथं दीध्यदिति?॥

(सिद्धान्तसमाधानवार्तिकम्)

दीध्यदिति च श्यन्व्यत्ययेन॥

(भाष्यम्)

दीध्यदिति च श्यन् व्यत्ययेन भविष्यति॥

(ए. दे प्र भा)

इटश्चापि ग्रहणं शक्यमकर्तुम्॥

( आक्षेपभाष्यम् )

**कथम्-अकणिषम्, अरणिषम्, कणिता श्वः रणिता श्व इति ?॥**

( समाधानभाष्यम् )

**आर्द्धधातुकस्येड्वलादेः इत्यत्र इडित्यनुवर्तमाने, पुनरिड्ग्रहणस्य प्रयोजनम्- इट् इडेव यथास्यात्, यदन्यत्प्राप्नोति तन्माभूदिति॥**

**किं श्चान्यत्प्राप्नोति ?॥ गुण :॥**

( आक्षेपभाष्यम् )

**यदि नियमः क्रियते पिपठिषतेरप्रत्ययः पिपठीः दीर्घत्वं न प्राप्नोति॥**

( समाधानभाष्यम् )

**नैष दोषः। आङ्गं यत्कार्यं तन्नियम्यते। न चैतदाङ्गम्॥**

**अथवा असिद्धं दीर्घत्वं तस्यासिद्धत्वान्नियमो न भविष्यति॥ दीधीवेवीटाम्॥**

दीधीति — दीधीवेव्योरिटश्च गुणवृद्धी न स्तः। आदीध्यनम्, आवेव्यनम्, कणितेति फलानि। वस्तुतः, अयं योगः शक्योऽकर्तुम्। दीधीवेव्योश्छन्दोविषयत्वात्। दृष्टानुविधित्वाच्च छन्दसः। अदीधेत् अदीधयुरित्यत्र गुणदर्शनाच्च। न चादीधयुरित्यत्र जुसिचेति गुणः बाध्यसामान्यचिन्तया दीधीवेवीटामित्यस्य क्ङितिचेति बाधकः स्यादिति गुणदर्शनादिति हेतुकथनमयुक्तमिति वाच्यम्। सजातीयविषयत्वेन प्रत्ययाश्रयक्ङितिचेत्यस्यैव जुसिचेत्येतद्बाधकं स्यादिति तदाशयात्। अथवा येन नाप्राप्तन्यायेन सकललक्ष्यप्राप्तत्वात् क्ङितिचेत्यस्यैव जुसिचेति बाधकम्। दीध्यदिति तु श्यन्व्यत्ययेन भविष्यतीति क्ङितिचेत्येव निषेधसिद्धेः। आर्धधातुकस्येडित्यत्र इडित्यनुवर्तमाने पुनरिड्ग्रहणस्य प्रयोजनम्,- इट् इडेव

यथा स्यात्। गुणादि– अन्यद्धत्गाग्नोरि, तन्मा भूदिति नियमाद्गुण-निषेधः सिध्यति। न च दिपठीरित्यत्र नियमेन दीर्घवारणम्। दीर्घस्यासिद्धत्वेन नियमेन तद्वारणासंभवात् ॥

हलोऽनन्तराः संयोगः ॥ १।१।७ ॥

( आक्षेपभाष्यम् )

अनन्तरा इति। कथमिदं विज्ञायते–अविद्यमानमन्तरं येषामिति, आहोस्विद्विद्यमाना अन्तरेषामिति ? ॥ किं चातः

( प्रत्याक्षेपसमाधानभाष्यम् )

यदि विज्ञायते–अविद्यमानमन्तरं येषामिति। अवग्रहे संयोगसंज्ञा न प्राप्नोति–'अप्स्वित्यप्ऽसु' इति। विद्यते ह्यत्रान्तरम् ॥ अथ विद्यते–अविद्यमाना अन्तरेषामिति, न दोषो भवति ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

यथा न दोषस्तथास्तु।

( प्रथमपक्षाभ्युपगमभाष्यम् )

अथवा पुनरस्तु–अविद्यमानमन्तरं येषामिति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्–अवग्रहे संयोगसंज्ञा न प्राप्नोति–'अप्स्वित्यप्ऽसु' इति। विद्यते ह्यत्रान्तरमिति ॥

( आक्षेपबाधकभाष्यम् )

नैव दोषो न प्रयोजनम् ॥

( आक्षेपवार्तिकम् )

संयोगसंज्ञायां सहवचनं यथान्यत्र ॥

( भाष्यम् )

संयोगसंज्ञायां सहग्रहणं कर्तव्यम्। "हलोनन्तराः संयोगःसह" इति वक्तव्यम्। किं प्रयोजनम्? सहभूतानां

संयोगसंज्ञा यथा स्यादेकैकस्य मा भूदिति । यथान्यत्र । तद्यथा अन्यत्रापि यत्रेच्छति सहभूतानां कार्यं, करोति तत्र सहग्रहणम् । तद्यथा " सह सुपा " " उभे अभ्यस्तं सह " इति ॥

( दूषणप्रश्नभाष्यम् )

किं च स्यात् यद्येकस्य संज्ञा स्यात् ? ।

( दोषप्रदर्शनभाष्यम् )

इह निर्यायात्, निर्वायात्, " वान्यस्य संयोगादेः " इत्येत्वं प्रसज्येत ॥ इह च संह्वर्षीष्टेति "ऋतश्चसंयोगादेः" इतीट् प्रसज्येत ॥ इह च संह्रियत इति " गुणोऽर्ति संयोगाद्योः " इति गुणः प्रसज्येत ॥ इह च दृषत्करोति, समित्करोति, " संयोगान्तस्य " इति लोपः प्रसज्येत ॥ इह च शक्ता वस्तेति, " स्कोः संयोगाद्योरन्ते च " इति लोपः प्रसज्येत । इह च निर्यातो निर्वातः " संयोगादेरातो धातोर्यण्वतः " इति निष्ठानत्वं प्रसज्येत ॥

( दोषबाधकभाष्यम् )

नैष दोषः । यत्तावदुच्यते–इह तावन्निर्यायात् निर्वायात् " वान्यस्य संयोगादेः " इत्येत्वं प्रसज्येतेति ॥ नैवं विज्ञायते संयोग आदिर्यस्य सोऽयं संयोगादिः संयोगादेरिति ॥ कथं तर्हि संयोगावादी यस्य सोऽयं संयोगादिः संयोगादेरिति । एवं तावत्सर्वमाङ्गं परिहृतम् ॥

( द्वितीयदूषणोद्धारभाष्यम् )

यदप्युच्यते–इह च दृषत्करोति, समित्करोति " संयोगान्तस्य " इति लोपः प्रसज्येतेति । नैवं विज्ञायते–संयोगोऽन्तो यस्य तदिदं संयोगान्तं संयोगान्तस्येति ॥ कथं तर्हि ? संयोगावन्तौ यस्य तदिदं संयोगान्तं संयोगान्तस्येति ॥

( तृतीयदूषणोद्धारभाष्यम् )

यदप्युच्यते इह च शक्ता वस्नेति " स्कोःसंयोगाद्योः " इति लोपः प्रसज्येतेति । नैवं विज्ञायते, संयोगावादी संयोगादी संयोगाद्योरिति ॥ कथं तर्हि ? संयोगशेरादी संयोगाद्योरिति ॥

( चतुर्थदूषणोद्धारभाष्यम् )

यदप्युच्यते इह च निर्यातो निर्वात इति " संयोगादेरातो धातोर्यण्वतः " इति निष्ठानत्वं प्रसज्येतेति । नैवं विज्ञायते संयोग आदिर्यस्य सोऽयं संयोगादिः संयोगादेरिति । कथं तर्हि ? संयोगावादी यस्य सोऽयं संयोगादिः संयोगादेरिति ॥

( आक्षेपभाष्यम् )

कथं कृत्वैकैकस्य संयोग संज्ञा प्राप्नोति ? ॥

( समाधानभाष्यम् )

प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टा इति । तद्यथा वृद्धिगुणसंज्ञे प्रत्येकं भवतः ॥

( समाधानबाधकप्रतिबंदीसिद्धान्तिभाष्यम् )

ननु चायमप्यस्ति दृष्टान्तः–' समुदाये वाक्यपरिसमाप्तिः ' इति । तद्यथा गर्गाः शतं दण्ड्यन्ताम् । अर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति ॥

( सहग्रहणप्रत्याख्यानभाष्यम् )

सत्येतस्मिन्दृष्टान्ते यदि तत्र प्रत्येकमित्युच्यते, इहापि सहग्रहणं कर्तव्यम् । अथ तत्रान्तरेण प्रत्येकमिति वचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः , इहापि नार्थः सहग्रहणेन ॥

( आक्षेपभाष्यम् )

अथ यत्र बहूनामानन्तर्यं किं तत्र द्वयोर्द्वयोः संयोगसंज्ञा भवति, आहोस्विदविशेषेण ? ॥

(भाष्यम्)

कस्मात्र विशेषः ?॥

(आक्षेपवार्तिकम्)

समुदाये संयोगादिलोपो मस्जेः ॥

(भाष्यम्)

समुदाये संयोगादिलोपो मस्जेर्न सिद्ध्यति। मङ्क्ता, मङ्क्तुम् ॥ इह च निर्ग्लेयात् निर्ग्लायात् निर्म्लेयात् निर्म्लायादिति, "वान्यस्य संयोगादेः" इत्येत्वं न प्राप्नोति॥ इह च संस्वरिषीष्टेति, "ऋतश्च संयोगादेः" इतीट् न प्राप्नोति॥ इह च संस्वर्यते इति, "गुणोऽर्तिसंयोगाद्योः" इति गुणो न प्राप्नोति॥ इह च गोमत्करोति यवमात्करोति, "संयोगान्तस्य लोपः" इति लोपो न प्राप्नोति॥ इह च निर्म्लानो निर्ग्लान इति, "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं न प्राप्नोति॥

(प्रथमपक्षाभ्युपगमभाष्यम्)

अस्तु तर्हि द्वयोर्द्वयोः संयोगः ॥

(आक्षेपवार्तिकम्)

द्वयोर्हलोः संयोग इति चेद्द्विर्वचनम् ॥

(भाष्यम्)

द्वयोर्हलोः संयोग इति चेद्द्विर्वचनं न सिद्ध्यति। इन्द्रमिच्छति इन्द्रीयति। इन्द्रीयतेः सन् इन्दिद्रीयिषति॥ "नन्द्राः संयोगादयः" इति द्विर्वचनं न प्राप्नोति॥

(समाधानवार्तिकम्)

न वाज्विधेः ॥

(भाष्यम्)

न वा एष दोषः॥ किं कारणम्?। अज्विधेः। न्द्राः संयोगादयो न द्विरुच्यन्ते। अजादेरिति वर्तते॥

*( आक्षेपभाष्यम् )*

**अथ यद्येवं बहूनां संयोगसंज्ञा, अथापि द्वयोर्द्वयोः, किं गतमेतदियता सूत्रेण । आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम् ? ।**

*( समाधानभाष्यम् )*

**गतमित्याह ॥ कथम् ? ॥ यदा तावद्बहूनां संयोगसंज्ञा, तदैवं विग्रहः करिष्यते—अविद्यमानमन्तरमेषामिति ॥**

*( समाधानशेषभाष्यम् )*

**यदा द्वयोर्द्वयोः संयोगसंज्ञा, तदैवं विग्रहः करिष्यते—अविद्यमाना अन्तरैतावत्—इति द्वयोर्द्वयोरन्तरा कश्चिद्विद्यते वा न वा ॥**

*( समुदायसंज्ञाभ्युपगमभाष्यम् )*

**अस्तु तर्हि समुदाये संज्ञा ॥**

*( समुदायसंज्ञादूषणस्मारणभाष्यम् )*

**ननु चोक्तम्—समुदाये संयोगादिलोपो मस्जेः इति ॥**

*( समुदायसंज्ञादूषणनिराकरणसिद्धान्तभाष्यम् )*

**नैष दोषः । वक्ष्यत्येतत्—अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम्—इति ॥**

*( समुदायसंज्ञादूषणनिराकरणैकदेशिभाष्यम् )*

**अथवाऽविशेषेण संयोगसंज्ञा विज्ञास्यते—द्वयोरपि बहूनामपि । तत्र द्वयोर्या संयोगसंज्ञा, तदाश्रयो लोपो भविष्यति ॥**

*( समुदायसंज्ञापक्षोक्तदूषणान्तरनिराकरणसिद्धान्तभाष्यम् )*

**यदप्युच्यते इह च निर्ग्लैयात् निर्ग्लायात् निर्म्लैयात् निर्म्लायादिति " वान्यस्य संयोगादेः " इत्येत्वं न प्राप्नोति इति ॥ अङ्गेन संयोगादि विशेषयिष्यामः—अङ्गस्य संयोगादेरिति ॥ एवं तावत्सर्वमाङ्गं परिहृतम् ॥ यदप्युच्यते इह च गोमान्करोति यवमान्करोति—इति " संयोगान्तस्य लोपः "**

इति लोपो न प्राप्नोति इति ॥ पदेन संयोगान्तं विशेषयिष्यामः– पदस्य संयोगान्तस्येति ॥

यदप्युच्यते–इह च निर्ग्लानो निर्म्लान इति "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं न प्राप्नोतीति ॥ धातुना संयोगादिं विशेषयिष्यामः–धातोःसंयोगादेरिति ॥

( अथानन्तरशब्दार्थनिरूपणम् )

( आक्षेपवार्तिकम् )

स्वरानन्तर्हितवचनम् ॥

( भाष्यम् )

स्वरैरनन्तर्हिता हलः संयोगसंज्ञा भवन्तीति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ व्यवहितानां मा भूत् पचति पनसम् ॥

( आक्षेपबाधकभाष्यम् )

ननु चानन्तरा इत्युच्यते । तेन व्यवहितानां न भविष्यति ॥

( आक्षेपसाधनवार्तिकम् )

दृष्टमानन्तर्यं व्यवहितेऽपि ।

( भाष्यम् )

व्यवहितेऽप्यनन्तरशब्दो दृश्यते । तद्यथा–अनन्तराविमौ ग्रामौ इत्युच्यते, तयोश्चैवान्तरा नद्यश्च पर्वताश्च भवन्तीति ॥

( आक्षेपबाधकभाष्यम् )

यदि तर्हि व्यवहितेऽप्यनन्तरशब्दो भवति । आनन्तर्यवचनमिदानीं किमर्थं स्यात् ? ॥

( आक्षेपसाधकवार्तिकम् )

आनन्तर्यवचनं किमर्थमितिचेदेकप्रतिषेधार्थम् ॥

( भाष्यम् )

एकस्य हलः संयोगसंज्ञा मा भूदिति ॥ किं च स्यात्

यद्येकस्य हलः संयोगसंज्ञा स्यात्?॥ इयेष उवोष " इजादेश्च गुरुमतो नृच्छः " इत्याम् प्रसज्येत॥

( समाधानवार्तिकम् )

न वाऽनज्जातीयव्यवायात् ॥

( भाष्यम् )

न वा एष दोषः। किं कारणम्?। अतज्जातीयस्य व्यवायात्। अतज्जातीयकं हि लोके व्यवधायकं भवति॥

( अनुयोगभाष्यम् )

कथं पुनर्ज्ञायते–अतज्जातीयकं लोके व्यवधायकं भवतीति?॥

( उत्तरभाष्यम् )

एवं हि कंचित् कश्चित्पृच्छति–'अनन्तर एते ब्राह्मणकुले,' इति। स आह 'नानन्तरे,' वृषलकुलमनयोरन्तरा' इति॥

( आक्षेपभाष्यम् )

किं पुनः कारणं क्वचिद्तज्जातीयकं व्यवधायकं भवति, क्वचिन्न?॥

( समाधानभाष्यम् )

सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति॥

( आक्षेपभाष्यम् )

कथम्–अनन्तराविमौ ग्रामाविति?॥

( समाधानभाष्यम् )

ग्रामशब्दोऽयं बह्वर्थः। अस्त्येव शालासमुदाये वर्तते, तद्यथा ग्रामो दग्धइति। अस्ति वाटपरिक्षेपे वर्तते, तद्यथा गामं प्रविष्ट इति। अस्ति मनुष्येषु वर्तते, तद्यथा गामो गतो ग्राम आगत इति। अस्ति सारण्यके ससीमके स स्थण्डिलके वर्तते, तद्यथा ग्रामो लब्ध इति॥ तद्यः सार-

पयके सर्वास्के सस्थण्डिलके दृष्टे तमभिसमीक्ष्यैतत्प्रयुज्यते—अनन्तराविमौ ग्रामाविति । सर्वमेव ह्यसजातीयकं व्यवधायकं भवति ॥ हलोऽनन्तराः ॥

हलोऽनन्तरेति—अनन्तरेत्यस्य यद्यविद्यमानमन्तरं नाम वर्णशून्यकालो येषामिति विग्रहे अप्सु स्वप्स्यति–अप्सु इति–अवग्रहे संयोगसंज्ञा न स्यात् । यद्यविद्यमानवर्णा अन्तरा नाम मध्ये येषामिति विग्रहे तु पकारसकारयोर्मध्ये कालव्यवधानेऽपि वर्णव्यवधानाभावान्न दोषः । वस्तुतस्तु संयोगसंज्ञाया अभावेऽपि दोषाभावः । अत्र समुदायस्य संयोगसंज्ञार्थं सहवचनं कर्तव्यम् । "सह सुपा" "उभे अभ्यस्तं सह" इत्यत्र समुदायस्य संज्ञार्थं सहग्रहणात् । अन्यथा–एकैकस्य संयोगसंज्ञायां तु निर्यायात्–वान्यस्य संयोगादेरित्येत्वम् । संहृषीष्टेत्यत्रऋतश्च संयोगादेरितीट्, संह्रियते, शृणोतीति शृणः इषत्करोति, संयोगान्तस्य लोपः । शक्ता स्कोःसंयोगाद्योरिति लोपः, निर्यात इत्यत्र संयोगादेरिति निष्ठा नत्वं प्राप्नोति । तथापि संयोगघटितेषु पूर्वोक्तपदेषु संयोगौ, इत्येवं द्विवचनान्तेन समासे दोषोद्धारः कर्तुं शक्यते । प्रत्येकं संयोगसंज्ञाप्राप्तिरस्तु गुणवृद्धिसंज्ञावत् प्रत्येकं वाक्यपरिसमाप्तेः । वस्तुतस्तु समुदाये वाक्यपरिसमाप्तिः गर्गाः शतमित्यत्र दृष्टेति, तथैवात्र समुदाये विनापि सहग्रहणं संज्ञानं भविष्यति । यद्वा अनन्तरा इत्यस्य सान्तरभिन्ना इत्यर्थः । सान्तराश्च स्वपूर्ववृत्तित्व, स्वोत्तरवृत्तित्व, स्वावृत्तित्वमेतत्त्रितयसंबन्धेन यत्किंचिद्विशिष्टसंख्यावन्त एव । न एकत्वसंख्यावन्त इत्यर्थादनेकेषामेव विनापि सहग्रहणं संयोगसंज्ञा भविष्यति । समन्वयस्तु विस्तरभयान्नप्रदर्श्यते । ननु यत्र बहूनामानन्तर्यं तत्र किं द्वयोर्द्वयोरेव संयोगसंज्ञा, आहोस्वित् बहूनामेव ? । नान्त्यः–मङ्क्ता, संयोगादिलोपः । निर्ग्लेयात्–वान्यस्येत्वम् । संस्वरिषीष्ट, गोमान्करोति, निर्ग्लानः, इत्यादौ पूर्वोक्तकार्याणि न प्राप्नुवन्ति । नाप्याद्यः–इन्दिद्रियिषति, नन्द्रेति निषेधा-

द्विर्वचनं न प्राप्नोति—इति चेत् न। बहूनामेव संयोगसंज्ञेति पक्षे मङ्क्तेत्यत्र मस्जेरन्त्यात्पूर्वो नुमिति वार्तिकेन सजयोर्मध्ये नकारविधानात् सकारस्यैव संयोगादित्वेन लोपसिद्धेः। निर्ग्लेयादित्यादौ च धातुपदाङ्गादीनां संयोगविशेषणत्तत्र तत्र दोषपरिहाराणां कर्तुं शक्यत्वात्। द्वयोरेवेति पक्षेऽपि—इन्दिद्रियिषतीत्यत्र नन्द्रेति सूत्रे, अच इत्यनुवृत्तेर्दोषाभावात्। न च बहूनां घटकेन व्यवधानात् सान्तरत्वेन संज्ञाप्राप्तिरिति वाच्यम्। स्वघटकेन स्वस्य व्यवधानाभावात्। अन्येन व्यवाये, एव व्यवहितशब्दव्यवहारात्—अज्भिरव्यवहितेति वक्तव्यम्। तेन पनसमित्यत्र सकारमकारयोरकारव्यवधाने संयोगसंज्ञाया अभावान्नसलोपः। न च सान्तरत्वेन संयोगसंज्ञाया अप्राप्तिः व्यवहितेऽपि अनन्तरशब्दप्रयोगो लोकेऽपि नदीपर्वतैर्व्यवधानेऽपि, अनन्तराविमौ ग्रामौ—इति व्यवहारात्। न चानन्तरवचनसामर्थ्याद्व्यवहितस्यैव ग्रहणम्। एकस्य हलः संयोगसंज्ञावारणार्थं तस्य चारितार्थ्यात्। अत एव इयेषेत्यादौ—इजादेरित्याम्न। विजातीयव्यवधानशून्यानामेवानन्तरग्रहणम्। अनन्तराविमौ ग्रामौ—इत्यादौ तु ग्रामशब्दः सारण्यके ससीमके सपर्वते सनदीके वर्तते। तमभिसमीक्ष्य—अनन्तराविमौ ग्रामाविति प्रयोगात्॥

मुखनासिकावचनोऽनुनासिकः॥ १।१।८॥

(आक्षेपभाष्यम्)

**किमिदं मुखनासिकावचनः इति?॥**

(समाधानभाष्यम्)

**मुखं च नासिका च मुखनासिकम्। मुखनासिकं वचनं यस्य सोऽयं मुखनासिकावचनः॥**

(आक्षेपभाष्यम्)

**यद्येवं मुखनासिकवचन इति प्राप्नोति॥**

(समाधानभाष्यम्)

**निपातनाद्दीर्घत्वं भविष्यति॥**

( समाधानान्तरभाष्यम् )

अथवा मुखनासिकमावचनमस्य सोऽयं मुखनासिकावचनः ॥

( आक्षेपभाष्यम् )

अथ किमिदमावचनमिति ?

( समाधानभाष्यम् )

ईषद्वचनमावचनमिति, किंचिन्मुखवचनं किंचिन्नासिकावचनम् ।

( समाधानान्तरभाष्यम् )

मुखद्वितीया वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः ॥ मुखोपसंहिता वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः ॥

( आक्षेपभाष्यम् )

अथ मुखग्रहणं किमर्थम् ? ॥

( समाधानभाष्यम् )

नासिकावचनोऽनुनासिकः इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत । मुखग्रहणे पुनः क्रियमाणे न दोषो भवति ॥

( आक्षेपभाष्यम् )

अथ नासिकाग्रहणं किमर्थम् ? ॥

( समाधानभाष्यम् )

मुखवचनोऽनुनासिकः इतीयत्युच्यमाने कचटतपानामेव प्रसज्येत । नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति ॥

( प्रत्याख्यानभाष्यम् )

मुखग्रहणं शक्यमकर्तुम् ।

( आक्षेपभाष्यम् )

केनेदानीमुभयवचनानां भविष्यति ? ॥

( समाधानभाष्यम् )

प्रासादवासिन्यायेन । तद्यथा–केचित्प्रासादवासिनः, केचित्–भूमिवासिनः, केचिदुभयवासिनः । ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन । ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन । ये तूभयवासिनः गृह्यन्ते एव ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च एवमिहापि केचिन्मुखवचनाः केचिन्नासिकावचनाः, केचिदुभयवचनाः । तत्र ये मुखवचना गृह्यन्ते ते मुखग्रहणेन । ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन । ये उभयवचना गृह्यन्ते एव ते मुखग्रहणेन नासिकाग्रहणेन च ॥

( आक्षेपभाष्यम् )

भवेदुभयवचनानां सिद्धम् । यमानुस्वाराणामपि प्राप्नोति ॥

( समाधानभाष्यम् )

नैव दोषो न प्रयोजनम् ॥

( अन्योन्याश्रयपरिहारायाक्षेपवार्तिकम् )

इतरेतराश्रयं तु ॥

( भाष्यम् )

इतरेतराश्रयन्तु भवति ॥ का इतरेतराश्रयता ? ॥ सतोऽनुनासिकस्य संज्ञया भवितव्यम् । संज्ञया च नामानुनासिको भाव्यते ॥ तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्प्यन्ते ॥

( सिद्धान्तसमाधानवार्तिकम् )

अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् ॥

( भाष्यम् )

किमुक्तम् ? ॥

( समाधानभाष्येसिद्धान्तिवार्तिकम् )

सिद्धं तु नित्यशब्दत्वात्–इति ॥

( भाष्यम् )

**नित्याः शब्दाः । नित्येषु शब्देषु सतोऽनुनासिकस्य-संज्ञा क्रियते । न संज्ञयाऽनुनासिको भाव्यते ॥**

( आक्षेपभाष्यम् )

**यदि तर्हि नित्याः शब्दाः किमर्थं शास्त्रम् ? ॥**

( सिद्धान्तवार्तिकम् )

**किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् ॥**

( भाष्यम् )

**निवर्तकं शास्त्रम् ॥ कथम् ? ॥ आङस्माथविशेषेणोपदिष्टोऽनुनासिकः । तस्य सर्वत्रानुनासिकबुद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते छन्दस्यचि परत आङोऽनुनासिकस्य प्रसङ्गेऽनुनासिकः साधुर्भवतीति ॥ मुखनासिकावचनोऽनुनासिकः ॥**

मुखनासिकेति—मुखंच नासिका च मुखनासिकम् । तद्वचनं यस्य निपातनाद्दीर्घः । अथवा मुखनासिकम्—आवचनं यस्येति विग्रहः । मुखवचनं किंचिन्नासिकावचनम् । मुखद्वितीया मुखसहाया नासिका वचनं यस्य । यद्वा मुखोपसंहिता नासिका वचनं यस्य । मुखस्य नासिकायाश्च यदन्तरालं किंचिन्मुखांशः किंचिन्नासिकांशश्च वचनं यस्येत्यर्थः । तथा च मुखं च नासिकाचेति विग्रहः उभाभ्यामन्तरालं व्यपदिश्यते । मुखग्रहणाभावेऽपि नासिकामात्रवचनानां यमानुस्वाराणामेव संज्ञा स्यात् । नासिकाग्रहणाभावे तु कचटतपानामेव संज्ञा स्यात् । वस्तुतस्तु—मुखग्रहणं कर्तुमशक्यम् । प्रासादवासिन्यायेन नासिकामात्रवचनानामुभयवचनानाञ्च—संज्ञासिद्धेः । यमानुस्वाराणां तु—अनुनासिकत्वस्य फलाभावः । न च संज्ञयानुनासिकस्योत्पत्तिः । संज्ञा चानुनासिकया भाव्यन्ते इत्यन्योन्याश्रयापत्तिः । सिद्धं तु नित्यशब्दत्वात् । सिद्ध एवानुनासिकः तस्यैव शास्त्रेण साधुत्वमात्रं विधीयते । अत्रैवायं साधुर्नान्यत्रेति ॥

( सवर्णसंज्ञासूत्रम् )

तुल्यास्यप्रयत्नं सवर्णम् ॥१।१।९॥

( आक्षेपभाष्यम् )

किमिदं तुल्यास्यप्रयत्नमिति ? ॥

( समाधानभाष्यम् )

तुलया संमितं तुल्यम् । आस्यं च प्रयत्नश्च आस्यप्रयत्नम् । तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवति॥

( आक्षेपभाष्यम् )

किं पुनरास्यम् ? ।

( समाधानभाष्यम् )

लौकिकमास्यम् । ओष्ठात्प्रभृति प्राक्काकलकात् ॥

( आक्षेपभाष्यम् )

कथं पुनरास्यम् ? ॥

( समाधानभाष्यम् )

अस्यन्त्यनेनवर्णानिति आस्यम् ॥ अन्नमेतदास्यन्दत इति वास्यम् ॥

( आक्षेपभाष्यम् )

अथ कः पुनः प्रयत्नः ? ॥

( समाधानभाष्यम् )

प्रयतनं प्रयत्नः । प्रपूर्वाद्यततेर्भावसाधनो नङ् प्रत्ययः ।

( आक्षेपभाष्यम् )

यदि लौकिकमास्यम् । किमास्योपादाने प्रयोजनम् ? । सर्वेषां हि तत्तुल्यम् ॥

( समाधानभाष्यम् )

वक्ष्यत्येतत्-प्रयत्न विशेषणमास्योपादानमिति ॥

( आक्षेपवार्तिकम् )

सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसाम्यात् ॥

( भाष्यम् )

सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसंङ्गो भवति । जाबगड-

दशाम् ॥ किं कारणम् ? ॥ प्रयत्नसाम्यात् । एतेषां हि समानः प्रयत्नः ॥

( न्यासान्तरेणसमाधानवार्तिकम् )

सिद्धंत्वास्ये तुल्यदेशप्रयत्नं सवर्णम् ॥

( भाष्यम् )

सिद्धमेतत् । कथम् ? । आस्ये येषां तुल्योदेशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति वक्तव्यम् ॥

( आक्षेपभाष्यम् )

एवमपि किमास्योपादाने प्रयोजनम् ? । सर्वेषां हि तत्तुल्यम् ॥

( समाधानभाष्यम् )

प्रयत्नविशेषणमास्योपादानम् । सन्तिह्यास्याद्बाह्याः प्रयत्नाः । ते हापिता भवन्ति । तेषुसत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति ॥ के पुनस्ते ? ॥ विवारसंवारौ, श्वासनादौ, घोषवदघोषता, अल्पप्राणता, महाप्राणतेति ॥ तत्र वर्गाणां प्रथमद्वितीया विवृतकण्ठाः, श्वासानुप्रदानाः अघोषाश्च । एकेऽल्प प्राणाः, अपरे महाप्राणाः ॥ तृतीयचतुर्थाः संवृतकण्ठाः नादानुप्रदानाः घोषवन्तः । एकेऽल्पप्राणाः, अपरे महाप्राणाः ॥ यथा तृतीयास्तथा पञ्चमा आनुनासिक्य वर्जम् । आनुनासिक्यमेषामधिको गुणः ॥

( आक्षेपभाष्यम् )

एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति, बाह्यं ह्यास्यात्स्थानमवर्णस्य ॥

( समाधानभाष्यम् )

सर्वमुखस्थानमवर्णम्—एक इच्छन्ति ॥

( आक्षेपभाष्यम् )

एवमपि व्यपदेशो न प्रकल्पते—'आस्ये येषां तुल्यो देशः' इति ॥

(समाधानभाष्यम्)

व्यपदेशिवद्भावेन व्यपदेशो भविष्यति ॥

(आक्षेपभाष्यम्)

सिध्यति। सूत्रं तर्हि भिद्यते ॥

(सिद्धान्तसमाधानभाष्यम्)

यथान्यासमेवास्तु ॥

(आक्षेपभाष्यम्)

ननु चोक्तम्–सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसाम्यात्–इति ॥

(सिद्धान्तसमाधानभाष्यम्)

नैष दोषः न हि लौकिकमास्यम् ॥ किं तर्हि तद्धितान्तमास्यम्। आस्येभवमास्यम्। शरीरावयवाद्यत्। किं पुनरास्ये भवम्?॥ स्थानं करणं च ॥

(आक्षेपभाष्यम्)

एवमपि प्रयत्नोऽविशेषितो भवति ॥

(समाधानभाष्यम्)

प्रयत्नश्च विशेषितः ॥ कथम्?। न हि प्रयतनं प्रयत्नः। किं तर्हि?। प्रारम्भो यत्नस्य प्रयत्नः ॥

(आक्षेपभाष्यम्)

यदि प्रारम्भो यत्नस्य प्रयत्नः एवमप्यवर्णस्य एङोश्च सवर्णसंज्ञा प्राप्नोति ॥

(समाधानभाष्यम्)

प्रश्लिष्टावर्णावेतौ ॥

(आक्षेपभाष्यम्)

अवर्णस्य तर्ह्यैचोश्च सवर्णसंज्ञा प्राप्नोति ॥

(समाधानभाष्यम्)

विवृततरावर्णावेतौ ॥

(आक्षेपभाष्यम्)

एतयोरेव तर्हि मिथः सवर्णसंज्ञा प्राप्नोति ॥

( समाधानभाष्यम् )

नै तौ तुल्यस्थानौ ॥

( आक्षेपभाष्यम् )

उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति ॥

( समाधानभाष्यम् )

अभेदका उदात्तादयः ॥

( एकदेशिभाष्यम् )

अथवा किं न एतेन प्रारम्भो यत्नस्य प्रयत्न इति। प्रयतनमेव प्रयत्नः । तदेव च तद्धितान्तमास्यम् । यत्समानं तदाश्रयिष्यामः ॥ किं सति भेदे ? । सतीत्याह । सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम् । कुत एतत् ? । भेदाधिष्ठाना हि सवर्णसंज्ञा, यदि हि यत्र सर्वं समानं तत्र स्यात् । सवर्णसंज्ञावचनमनर्थकं स्यात् ॥

( सिद्धान्तिनआक्षेपभाष्यम् )

यदि तर्हि सतिभेदे 'किंचित्समानम्' इति कृत्वा सवर्णसंज्ञा भविष्यति शकारच्छकारयोः षकारठकारयोः सकारथकारयोः सवर्णसंज्ञा प्राप्नोति ॥ एतेषां हि सर्वमन्यत्समानं करणवर्जम् ॥

( एकदेशसमाधानभाष्यम् )

एवं तर्हि प्रयतनमेव प्रयत्नः । तदेव हि तद्धितान्तमास्यम् । न त्वयं द्वन्द्वः आस्यं च प्रयत्नश्च आस्यप्रयत्नमिति ॥ किं तर्हि ? त्रिपदोऽयं बहुव्रीहिः —तुल्य आस्ये प्रयत्न एषामिति ॥

( भाष्यम् )

अथवा पूर्वस्तत्पुरुषस्ततो बहुव्रीहिः तुल्य आस्ये तुल्यास्यस्तुल्यास्यः प्रयत्न एषामिति ॥

(भाष्यम्)

आस्ये प्रयत्नः तुल्य आस्यप्रयत्न एषामिति ॥

(आक्षेपवार्तिकम्)

॥ तस्य ॥

(भाष्यम्)

तस्येति तु वक्तव्यम्। किं प्रयोजनम्?। यो यस्य तुल्यास्यप्रयत्नः स तस्य सवर्णसंज्ञो यथा स्यात्। अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञो मा भूत्॥

(समाधानवार्तिकम्)

॥ तस्यावचनं वचनप्रामाण्यात्॥

(भाष्यम्)

तस्येति न वक्तव्यम्। अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः कस्मान्न भवति?। वचनप्रामाण्यात्। सवर्णसंज्ञावचनसामर्थ्यात्। यदि हि अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः स्यात्। सवर्णसंज्ञावचनमनर्थकं स्यात्॥

(समाधानवार्तिकम्)

॥ सम्बन्धिशब्दैर्वा तुल्यम्॥

(भाष्यम्)

सम्बन्धिशब्दैर्वा पुनस्तुल्यमेतत्। तद्यथा—सम्बन्धिशब्दाः "मातरि वर्तितव्यम्" "पितरि शुश्रूषितव्यम्" इति। न चोच्यते 'स्वस्यां मातरि' 'स्वस्मिन् पितरि' इति। सम्बन्धाचैतद्गम्यते—या यस्य माता यश्च यस्य पितेति। एवमिहापि—"तुल्यास्यप्रयत्नं सवर्णम्" इत्यत्र सम्बन्धिशब्दावेतौ, तत्र सम्बन्धादेतद्गन्तव्यम्—यत्प्रति यत्तुल्यास्यप्रयत्नं तत्प्रति तत्सवर्णसंज्ञं भवतीति॥

(आक्षेपवार्तिकम्)

ऋकारऌकारयोः सवर्णविधिः॥

( भाष्यम् )

ऋकारऌकारयोः सवर्णसंज्ञा विधेया। होतृ ऌकारः होतॄकार इति। किं प्रयोजनम् ?। " अकः सवर्णे दीर्घः " इति दीर्घत्वं यथा स्यात्॥

( सावर्ण्यखण्डनभाष्यम् )

नैतदस्ति प्रयोजनम्। वक्ष्यत्येतत्–सवर्णदीर्घत्वे ऋति ऋ वा वचनम्। ऌति ऌ वा वचनम्–इति॥

( सावर्ण्यमण्डनभाष्यम् )

तत्सवर्णे यथा स्यात्। इह मा भूत् दध्यॢकारः मध्वॢकार इति।

( सावर्ण्यखण्डनभाष्यम् )

यदेतत्सवर्णदीर्घत्वे ऋतीति एतद्दत इति वक्ष्यामि। ततः " ऌति " ऌकारे परत ऌकारो वा भवतीति ऋत इत्येव॥

( सावर्ण्यमण्डनभाष्यम् )

तन्न वक्तव्यं भवति॥

( सावर्ण्यखण्डनभाष्यम् )

अवश्यं तद्वक्तव्यम्। ऊकालोऽज्ह्रस्वदीर्घप्लुतसंज्ञो भवतीत्युच्यते। न च ऋकार ऌकारो वाऽस्ति॥

( सावर्ण्यमण्डनभाष्यम् )

ऋकारस्य ऌकारस्य चाप्लुत्वं वक्ष्यामि। तच्चावश्यं वक्तव्यम्। प्लुतो यथा स्यात्। होतृ ऋकार होतॄकारः। होतृ ३ कार इति। होतृ ऌकारः होतॢकारः होतॢ ३ कार इति॥

( आक्षेपभाष्यम् )

किं पुनरत्र ज्यायः?। सवर्णसंज्ञाविधानमेव ज्यायः दीर्घत्वं चैव हि सिद्धं भवति। अपि च ऋकारग्रहणेन ऌकारग्रहणं सन्निहितं भवति। " ऋत्यकः " खट्वऋष्यः

माल ऋष्यः। इदमपि सिद्धं भवति खट्वल्कारो माल्ल्कार इति ॥ "वा सुप्यापिशलेः" उपर्कारीयति उपार्कारीयति। इदमपि सिद्धं भवति--उपल्कारीयति उपाल्कारीयति ॥

(एकदेशाक्षेपभाष्यम्)

यदि तर्हि ऋकारग्रहणेनऌकारग्रहणं सन्निहितं भवति, "उरण्रपरः" ऌकारस्यापि रपरत्वं प्राप्नोति ॥

(समाधानभाष्यम्)

ऌकारस्य लपरत्वं वक्ष्यामि। तच्चावश्यं वक्तव्यम्। असत्यां सवर्णसंज्ञायां विध्यर्थम्। तदेव सत्यां रेफबाधनार्थं भविष्यति ॥

(एकदेशिकाक्षेपभाष्यम्)

इह तर्हि-"रषाभ्यां नो णः समानपदे" इत्यृकारग्रहणं चोदितं मातृणां पितृणामित्येतदर्थम्। तदिहापि प्राप्नोति-क्लृप्यमानं पश्येति ॥

(प्रतिबन्दीभाष्यम्)

अथासत्यामपि सवर्णसंज्ञायाम्-इह कस्मान्न भवति-प्रक्लृप्यमानं पश्येति ॥

(प्र ब स आ निरासभाष्यम्)

चुटुतुलशर्व्यवाये न इति वक्ष्यामि। अपर आह-"त्रिभिश्च मध्यमैर्वर्गैर्लशसैश्च व्यवाये न" इति वक्ष्यामीति। वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ ऌकारे लकारस्तदाश्रयः प्रतिषेधो भविष्यति ॥

(सिद्धान्तोपसंहारभाष्यम्)

यद्येवं, नार्थो रषाभ्यां णत्वे ऋकारग्रहणेन। वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ ऋकारे रेफः तदाश्रयं णत्वं भविष्याति ॥ तुल्यास्य० ॥ ९ ॥

तुल्यास्येति–अस्यन्त्यनेन वर्णानिति–आस्यम् । अथवान्नं यत्प्रति–आस्यन्दते द्रवीकरोति, तदास्यम् । ओष्ठात्प्रभृति प्राक्काकलकात् । प्रयतनं प्रयत्नः । सामर्थ्यादास्येति प्रयत्नविशेषणं तेनाभ्यन्तरप्रयत्नलाभः । ननु जशां पृष्टप्रयत्नवत्त्वान्मिथः सवर्णसंज्ञापत्तिरिति चेत्–अत्र केचित् । आस्ये तुल्यदेशप्रयत्नमिति पाठ्यम् । आस्ये येषां तुल्यो देशप्रयत्नश्च ते सवर्णसंज्ञका भवन्तीत्यर्थः । देशस्यास्यघटकत्वं व्यपदेशिवद्भावेन । जशां तु तुल्यस्थानत्वाभावान्न दोषः । आस्येत्यस्य प्रयत्नविशेषणत्वाद्बाह्यप्रयत्ननिरासः । यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुण इति भाष्येणानुनासिक्यस्य बाह्यप्रयत्नत्वकथनात्तुल्यास्यसूत्रे आस्यपदेन प्रयत्नपदेन च तस्याग्रहणबोधनात् । ङञ्योर्यावदास्यभवतुल्यत्वात्सवर्णसंज्ञासिद्धिः । वस्तुतस्तु–आस्ये भवमास्यं स्थानं प्रारम्भो यत्नः प्रयत्नः, आभ्यन्तर इत्यर्थः । तौ ययोस्तुल्यौ ते सवर्णसंज्ञा इत्यर्थात् यथास्थितसूत्रेऽपि न दोषः । अचेतनयावदास्यभवतुल्यस्यैव सवर्णज्ञाविधानादवर्णस्यैचां च न सवर्णसंज्ञा । गुणा अभेदका इति स्वीकारादुदात्तादीनां सवर्णसंज्ञासिद्धिः । केचित्तु–आस्यपदेन स्थानमेव गृह्यते । तत्प्रयत्नविशेषणम् । तथा च तुल्य आस्ये प्रयत्नो येषामिति त्रिपदो बहुव्रीहिः । यद्वा तुल्य आस्ये तुल्यास्यस्तत्पुरुषः । स प्रयत्नो येषामिति बहुव्रीहितत्पुरुषौ । यद्वा आस्ये प्रयत्नः आस्यप्रयत्नः, तुल्यः आस्यप्रयत्नो येषामिति वा विग्रहाश्रयणात्तत्स्थानावच्छेदेन समानप्रयत्नानामित्यर्थकरणेन तुल्यस्थानानां तुल्याभ्यन्तरप्रयत्नानामित्यर्थस्यार्थादेव लाभ इति वदन्ति ।

ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् । तेन होतृ लृकार इति स्थिते अकः सवर्ण इत्यनेनैव ईषत्स्पृष्टविवृतदीर्घयोः सिध्या वार्तिकद्वयं नारम्भणीयम् । अइउण् सूत्रानन्तरमीत्स्पृष्टऋलृशब्दयोः पाठात्तयोरच्त्वेन दीर्घसंज्ञासिद्धिः । तयोरच्त्वादेव होतृ ऋकार इत्यत्र प्लुतसिद्धिः ।

वार्तिककरणापेक्षया सवर्णसंज्ञाविधानमेव ज्यायः। तेन ऋत्यक इत्यादौ ऋपदेन ऌकारग्रहणात्खट्व् ऌकार इत्यत्र प्रकृतिभावः। उपाल्कारीयतीत्यत्र वासुप्येति वृद्धिः। न च उरण्रपर इत्यत्र ऋपदेन ऌकारग्रहणात्तस्यापि रपरत्वं प्राप्नोतीति वाच्यम्। ऌकारस्य लपरत्वं वक्ष्यामीति वचनेन लपरत्वसिद्धिः। न च क्लृप्यमानं पश्येत्यत्र ऋवर्णान्नस्येति णत्वापत्तिः। प्रक्लृप्यमानं पश्येत्यत्रैव चुटुतुलशर्व्यवाये नेति वचनेन तद्वारणात्॥

(परिभाषासूत्रम्)

नाज्झलौ॥ १।१।१०॥

(शकारसावर्ण्यनिषेधनिराकरणम्)

(आक्षेपवार्तिकम्)

**अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् [ तत्र सवर्णलोपे दोषः ]॥**

(आक्षेपवार्तिकाद्यभागव्याख्याभाष्यम्)

**अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति॥ किं कारणम्?। अज्झल्त्वात्। अच्चैव हि शकारो हल्च॥ कथं तावदच्त्वम्?। इकारः सवर्णग्रहणेन शकारमपि गृण्हातीत्येवमच्त्वम्। हल्षु चोपदेशाद्धलत्वम्॥ तत्र को दोषः?॥**

(आक्षेपसाधकवार्तिकम्)

**॥ तत्र सवर्णलोपे दोषः॥**

(भाष्यम्)

**तत्र सवर्णलोपे दोषो भवति। परश्शतानि कार्याणि- "झरो झरि सवर्णे" इति लोपो न प्राप्नोति॥**

(समाधानवार्तिकम्)

**॥ सिद्धमनच्त्वात्॥**

(भाष्यम्)

सिद्धमेतत् । कथम्? । अनच्त्वात्। कथमनच्त्वम्?। स्पृष्टं करणं स्पर्शानाम्। ईषत्स्पृष्टमन्तस्थानाम्। "विवृतमूष्मणाम्" ईषदित्येवानुवर्तते॥ "स्वराणां च" विवृतम्। ईषदिति निवृत्तम्॥

(समाधानान्तरवार्तिकम्)

॥ वाक्यापरिसमाप्तेर्वा ॥

(भाष्यम्)

वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतत् । किमिदं वाक्यापरिसमाप्तेरिति?। वर्णानामुपदेशस्तावत्। उपदेशोत्तरकालेत्संज्ञा। इत्संज्ञोत्तरकाल "आदिरन्त्येन सहेता" इति प्रत्याहारः। प्रत्याहारोत्तरकाला सवर्णसंज्ञा। सवर्णसंज्ञोत्तरकालम् – "अणुदित्सवर्णस्य चाप्रत्ययः" इति सवर्णग्रहणम्। एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति। न चात्रेकारः शकारं गृण्हाति॥

(आक्षेपभाष्यम्)

यथैव तर्हीकारः शकारं न गृण्हाति। एवमीकारमपि न गृण्हीयात्। तत्र को दोषः?। कुमारी ईहते कुमारीहते "अकः सवर्णे दीर्घः" इति दीर्घत्वं न प्राप्नोति॥

(समाधानभाष्यम्)

नैष दोषः। यदेतद्– "अकः सवर्णे दीर्घः" इत्यत्र प्रत्याहारग्रहणं तत्रेकार ईकारं गृण्हाति शकारं न गृण्हाति॥ अपर आह–अज्झलोः प्रतिषेधे शकारप्रतिषेधोज्झल्त्वात्। अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति। किं कारणम्? । अज्झल्त्वात्। अच्चैव हि शकारो हल्च॥ कथं तावदच्त्वम्?। इकारः

सवर्णग्रहणेन शकारमपि गृण्हातीत्येवमन्त्वम्, हल्पु चोपदेशाद्धलत्वम्॥ तत्र को दोषः?। तत्र सवर्णलोपे दोषः। तत्र सवर्णलोपे दोषो भवति। पररशतानि कार्याणि। "झरो झरि सवर्णे" इति लोपो न प्राप्नोति॥ सिद्धमनन्त्वात्। सिद्धमेतत्। कथम्? अनन्त्वात्। कथमनन्त्वम्?। वाक्यापरिसमाप्तेर्वा। उक्ता वाक्यापरिसमाप्तिः।

(आक्षेपभाष्यम्)

अस्मिन्पक्षे वेत्येतदसमर्थितं भवति।

(समाधानभाष्यम्)

एतच्च समर्थितम्। कथम्?। अस्तु "वा शकारस्य शकारेण सवर्णसंज्ञा, मा वा भूत्।

(आक्षेपभाष्यम्)

ननु चोक्तम्, पररशतानि कार्याणि "झरो झरि सवर्णे" इति लोपो न प्राप्नोतीति॥

(आक्षेपभाष्यम्)

मा भूल्लोपः।

(आक्षेपभाष्यम्)

ननु च भेदो भवति, सति लोपे द्विशकारकम्, असति लोपे त्रिशकारकम्॥

(आक्षेपबाधकभाष्यम्)

नास्ति भेदः,–असत्यपि लोपे द्विशकारकमेव। कथम्?। विभाषा द्विर्वचनम्॥

(आक्षेपसाधकभाष्यम्)

एवमपि भेदः–असति लोपे–कदाचिद्द्विशकारकम्। कदाचित् त्रिशकारकम्। सति लोपे, द्विशकारकमेव॥

(तटस्थाक्षेपभाष्यम्)

स एष कथं भेदो न?।

( तटस्थाक्षेपनिरासभाष्यम् )

**स्याद्यदि नित्यो लोपः स्यात् । विभाषा तु स लोपः ।**

( समाधानभाष्यम् )

**यथाभेदस्तथास्तु ॥ नाज्झलौ ॥ शिवम् ॥**

नाज्झलाविति—न च शकारस्येकारसवर्णत्वेन-अच्त्वात्, स्वतोहल्त्वाच्च तयोः परस्परं सावर्ण्यानापत्तिरिति वाच्यम् । इकारस्य विवृतत्वेन शकारस्येषद्विवृतत्वेन च प्रयत्नभेदादसवर्णत्वेन दोषाभावात् । वाक्यापरिसमाप्तेर्वा नाज्झलाविति सूत्रस्थाच्पदेन शकारस्याग्रहणादच्त्वाभावेन नाज्झलाविति निषेधाविषयत्वात् । तेन परश्शतानीत्यत्र झरो झरीति लोपासिद्धिः । अपरे तु वाक्यापरिसमाप्तेः शकारस्य शकारेण सवर्णसंज्ञायाः फलाभावाच्चादोषः । द्वित्वस्य लोपस्य चेत्युभयोर्वैकल्पिकत्वाद्द्विशकारत्रिशकाररूपयोः सिद्धेरित्याहुः ॥ शिवम् ॥

॥ इति श्रीमत्पतञ्जलिविरचिते महाभाष्ये
अर्थसंग्रहटीकायां चतुर्थाह्निकं समाप्तम् ॥

॥ श्रीः ॥

अस्य ग्रंथस्य आश्रयदातॄणां नामानि सादरमुल्लिख्यन्ते:—

| नाव | रक्कम |
|---|---|
| मुंबई युनिव्हर्सिटी | २००— ०—० |
| श्री. नानासाहेब पुराणीक पनवेल | १००— ०—० |
| श्रीमत बाळासाहेब पतप्रतिनिधी औंध | १६७— ८—० |
| श्री. शंकराचार्यमठ कुम्भकोणम्. | ३७— ४—० |
| श्री. गोकुळनाथमहाराज मुंबई. | ३८—१२—० |
| श्री. दीक्षितजी महाराज—मुंबई. | १६८—१२—० |
| लालजी गोकुळदास ट्रस्ट मुंबई. | १००— ०—० |
| केसरी मराठा ट्रस्ट पुणे. | २५— ०—० |
| श्रीमत सरदार बाबासाहेब बिवलकर पुणे. | २५— ०—० |
| श्रीमंत बाबासाहेब पतसचीव स. भोर. | २५— ०—० |
| श्रीमत दादासाहेब पटवर्धन वडगाव. | २५— ०—० |
| श्रीयुत् मट्टुभाई सॉलिसिटर मुंबई. | २५— ०—० |
| श्रीयुत् द. रा. धारपुरे मुंबई. | ५०— ०—० |
| श्रीयुत् रा. भा. पानवलकर ऑनेस्टी कं. मुंबई. | २५— ०—० |
| ,, वसंतराम जमियतराम वकील मुंबई. | २५— ०—० |
| स्वामी कुवलयानंद कैवल्यधाम मुंबई | २५— ०—० |
| शेट कानजी घेलाभाई भाट्ये कोल्हापूर. | २५— ०—० |
| शेट हरिलाल अचरतलाल विजया मिल्स कंपनी अहमदाबाद. | २५— ०—० |
| शेट पोपटलाल भालकीया मिल्स क. अहमदाबाद. | २५— ०—० |
| शेट दुर्गाप्रसाद शंभुदास लश्करी अहमदाबाद. | ३१— ०—० |

शेट जीवनलाल गिरधरलाल भरतखंड टेक्स्टाईल मिल्स क. अहमदाबाद २५–
शेट गोविंदास माणिलाल अहमदाबाद. २५–
शेट डी. के. पटेल माहेश्वरी मिल्स क. अहमदाबाद. २५–
कॅलिको मिल्स क. अहमदाबाद. २५–
सर चिनुभाई अहमदाबाद. २५–
वे. शा. स. बाळकृष्णजी पुराणी अहमदाबाद. २५–
गंगाप्रसाद पुराणी अहमदाबाद. २५–
जोशी गिरिजाशंकर अहमदाबाद. २५–
शेट वैजनाथजी चत्रभुज मारवारिया गुजराथ कॉटन मिल्स क. अहमदाबाद. २५–
श्रीयुत् बाबुराव साळवेकर सरदारगृह मुंबई. २५–
मेसर्स बी. ए. तारकर मुंबई. २५–
सर एस् एस्. पाटकर मुंबई. २५–
नेक नामदार मि. एम्. आर. जयकर मुंबई. २५–
श्रीयुत् एन्. डी. सामंत मुंबई. २५–
श्रीयुत् एस्. एम्. डहाणूकर मुंबई. २५–
सर चिंतामणराव देशमुख, गव्हर्नर रिझर्व बॅंक, मुंबई. २५–